## षोडशस्तुतिपदीपूर्वं देवाद्रिपञ्चकरहस्यम् ॥

### प्रथमं विद्यापीठम् ।

अथ षोडशस्तुतिपूर्वमस्थानपट्कसर्वपदैः ।
कल्याणत्रिकरूपं ध्यानं यत् तदधुना वक्ष्ये ॥ २८९

"जिण-ओहि-परमोही तहऽणंताणंतओहिजिणे ।
केवलि-भवत्थकेवलि-अभवत्थ य केवलीण च ॥ २९०

"चउदस-दसपुव्वीणं इक्कारसअंगि-कुट्ठबुद्धीणं ।
बीयाइमबुद्धीणं तहुग्गतवचरणचारीणं ॥ २९१

"गोयमसामिस्स महादाणस्स सुहम्मसामिणो तह य ।
सोलसपयाण पुव्विं नायव्वो ॐ नमो सद्दो ॥ २९२

"एएसिं सव्वेसिं एवं काउं अहं नमोकारं ।
जमियं विज्जं पउंजामि सा मे विज्जा [1]पसिज्झउ स्वाहा ॥" २९३

॥ इति प्रथमं विद्यापीठम् ॥

*

### द्वितीयमुपविद्यापीठम् ।

"ॐ इरिइरिकालि किरिकिरिकालि पिरिपिरिकालि गिरिगिरिकालि ।
सिरिसिरिकालि हिरिहिरिकालि आयरियकालि स्वाहा ॥ २९४

समवसरणे पूजा, उच्छीर्षके स्वप्नं शुभाशुभोपदेशः ॥

"पणत्रो नमो भयवओ वाहुवलिस्सेह पण्णसमणस्स ।
ॐ वग्गु वग्गु निवग्गु सुमणे सोमणसे महु तहा महुरे ॥" २९५

॥ इति द्वितीयमुपविद्यापीठम् ॥

*

1 पउजे J । पसीयउ J ।

तृतीयं चतुर्थं पीठम् ।

"इरिकाली किरिकाली पिरिकाली हिरि य कालि इरियाए ।
किरियाए सिरियाए हिरियाए कालि 'महकाली[1] ॥" २९६

॥ इति तृतीयं चतुर्थं पीठम् ॥

*

पञ्चमं षष्ठं प्रस्थानम् ।

"ॐ इरिइरि किरिकिरि पिरिपिरि सिरिसिरि हिरिहिरि ।
आयरियकालि पवणो गयणं किरिमेरु पयपणगं ॥" २९७

॥ इति पञ्चमं षष्ठं च प्रस्थानम् ॥

*

[ पञ्चप्रस्थानशब्दरहस्यम् — ]

स्नान-विलेपन-माला-मुकुटस्तिलक कुण्डलद्वन्द्वम् ।
ग्रैवेयमङ्गदयुगं हारैः केयूरयुगलं च ॥ २९८

सितवस्त्रदान-दीक्षे" गणेचिन्ता षोडश स्तुतिक्रमतः ।
'एएसिं' गाथार्थात् त्रैलोक्यातिशयसौभाग्यम् ॥ २९९

'बाहुबलि'तोऽथ केवलकल्याणं 'वग्गु वग्गु' सदृशोकः ।
तद्व'ग्गिवग्गु' सिंहासन'मपरपदे' च चमरधरौ ॥ ३००

'महुमहुरे' प्राकारो रत्नमयः सर्वपरिषदा[2] प्रथमः ।
'इरिकालि'पदचतुष्कात् सुवर्णशालो द्वितीयोऽथ ॥ ३०१

'इरियाए' पदपट्कात् राजतशालस्तृतीयको रम्यः ।
'इरिइरिकालि' रसपदाद् देवकृतातिशयसर्वस्वम् ॥ ३०२

'किरिमेरु'पद चतुष्काच्चतुर्मुखः 'पञ्चमात्' तु सद्धर्मम् ।
योजनगिरा दिशन्निह [3]सर्वं ज्ञात्वा त्रयं चान्तः ॥ ३०३

यद्विवा नगपदवर्द्धैश्चतुराननोऽत्र वीरोऽथ ।
पञ्चमगणभृन्मुख्यः सुधर्मनामा सगौतमः पुण्डरीकश्च ॥ ३०४

---

1 महाकाली J । 2 पर्षदा A । 3 सर्वज्ञाताऽत्र यन्त्रान्त J ।

ध्यायन्निति मन्त्रममुं महाव्रती विजितपवन-गगनमनाः ।
आत्मानं सर्वज्ञं पश्यति शिष्यं सुधर्मपदे ॥ ३०५

रस-गज-दर्श-दर्श-सूर्याः शैलाशा-रुद्र-दर्श-गजाः नवैकम् ।
सप्ताष्ट-त्र्यधिक दर्श-स्वरा नेत्र स्तुतिपदेष्वेषु ॥ ३०६

अक्षरसंख्या द्वीन्द्रिय-शशिनः[१५२] 'सव्वेसिं' इति मुखे वर्णाः ।
स्वाहान्ते एकगुणाः आद्यमस्थानके त्र्यशीतिरीतम् ॥ ३०७

त्र्यक्ष-रस-भूत-लोका गुण-युग-पञ्च-युगपद-नवैकवर्णाः ।
प्रणव-नमो महुमहुरे स्वाहान्तं रस-गुणमिता ह्येते ॥ ३०८

इरिकाली हिरिकाली स्वाहान्तं चन्द्र-दिग्गजैर्मिताः ।
प्रत्येकं चतुरक्षरचतुःपदैः पीठमिदमपरम् ॥ ३०९

इरियाए महकाली स्वाहान्तं हस्ति-युगमिता वर्णाः ।
षट्पदपीठे तुर्ये पीठे कुत्रापि न स्वाहा ॥ ३१०

ॐ इरिइरिकाली स्वाहान्तं पड्भिः पदैः परं पीठम् ।
शैल रसं-वार्धि-दर्श-युगपदवर्णैर्गुण-युगाः संख्या ॥ ३११

सप्रणव-मेरुपञ्चरूपदाक्षरैः पञ्चवार्द्धिभिर्नवभिः ।
नव-युगसंख्यावर्णाः पीठमिदं मन्त्रराजाख्यम् ॥ ३१२

सर्वप्रस्थानाक्षरसंयोगादद्रि-लोक-गुणवर्णाः ।
श्लोकद्वैशकं च वर्णाः सप्तदशेहास्य पीठे स्युः ॥ ३१३

[ ॐकारनिष्पत्तिः – ]

[१]अर्हद्देहाचार्योपाध्याय-मुनीन्द्रपूर्ववर्णोत्थः ।
प्रणवः सर्वत्रादौ ज्ञेयः परमेष्ठिसंस्मृत्यै ॥* ३१४

---

1 अर्हद्-देवाचा° A ।

*तुलना- अरिहंता असरीरा आयरिय उवज्झाय तहा मुणिणो ।
पंचक्खरनिप्पन्नो ॐकारो पंचपरमिट्ठी ॥७॥
— मानतुङ्गसूरिकृत-'नवकारसारथवन ।'

अथवा- निष्पन्न प्रथमो वर्णस्त्वर्हतामशरीरिणाम् ।
आचार्याणामुपाध्याय-मुनीनां प्रथमाक्षरैः ॥
— सागरचन्द्रसूरिकृत-मन्त्राधिराजकल्प, पटलः २, श्लो० २२ ।

अर्हत्-सिद्धाचार्योपाध्याय-मुनित्वरूपमर्हन्तः ।
पूज्योपचार-देशक-पाठक-निर्विषयचित्तत्वात् ॥ ३१५

ज्ञात्वा त्रिशलासूनोर्जन्मस्नात्रं सदानविरतिमहः ।
केवलिमहिमेत्येवं कल्याणत्रयमत्र मन्त्रपदैः ॥ ३१६

इति षोडशस्तुतिपदीपूर्वं
देवाद्रिपञ्चकं
श्रीसिंहतिलकसूरिकृतं मन्त्ररहस्यम् ॥

*

त्रयोदशदेवाद्रिरहस्यम् ।

एक-गुणस्तुतिपूर्वं यदिवा नव-लोकैलब्धिपदपूर्वम् ।
षट्कोणतत्र्यधिदेशे देवाद्रिरहोऽथ वक्ष्येहम् ॥ ३१७

"जिण-ओहि-परमोही अणंतोहि-अणंतणंतोहिजिणो ।
केवलि-भवत्थकेवलि-अभवत्थ य केवलीणं च ॥ ३१८

[1]"ऊजुमई विपुलमई वेउव्वियलद्धि-सव्वलद्धीणं ।
पण्हासमणाण तहा जंघाचारणमुणीणं च ॥ ३१९

"विज्जासिद्धाण तहा आगासगामीण तह य निचं पि ।
आमोसहि-विप्पोसहि-खेलोसहि-जल्लओसहीणं च ॥ ३२०

"सव्वोसहि-आसीविस-"दिट्ठिविसाणं च तह य निचं पि ।
वयणविस-तेयलेसा पणमिमो सीयलेसाणं ॥ ३२१

"चउदस-दसपुव्वीणं इक्कारसअंगसुत्तधारीणं ।
तह य दुवालसअंगीण उग्गतवचरणचारीणं ॥" ३२२

इय इकतीससंखा लद्धिपयाणं तु पढमपत्थाणे ।
सिरिपुण्णचंदसूरीहिं* वन्निया पणव-मायजुया ॥ ३२३

"खीरासव-महुआसव-अमयासवलद्धियाण तह चेव ।
अक्खीणमहाणसिलद्धियाण संभिन्नसोयाणं ॥ ३२४

---

[1] उज्जुमई J । * पूर्णचन्द्रसूरिकृता स्तुतिः परिशिष्टे द्रष्टव्या ।

"तत्तो पयाँणुसारी सँवीयबुद्धीण कुँट्ठबुद्धीणं ।"
इगेतीसं पुव्वुत्ता अट्ठजुया इगुँणचत्ता य ॥ ३२५

पणवो मायावन्नो पढमपयाइम्मि इत्थ अन्नेसु ।
सव्वेसु आइ पणवो मंतो सूरीण पढमथुइवलये ॥ ३२६

'सव्वेसिं एएसिं' एवम् ।

सँप्ताष्टौ दशँ-दशैकं-सूँर्याद्रि-दशाष्टमूँर्ति-गँज-नवैकम् ।
दशँ-दिग्गज-नेत्र-रुँद्राष्टाङ्क-दशँत्रितयँ-रुँद्र-दशँ-शैलाः ॥ ३२७

अँद्रि-नैव-हँस्ति-मँद-दशँ-गँज-स्वरौँ-दशँ त्रयोदशँ च ।
दशँ रुँद्रत्रेयँ-नवँयुँगर्मष्टाष्टौ सर्वलब्धिपदवर्णाः ॥ ३२८

एषां समग्रसंख्या नव-रस-लोकास्तुँ 'एसिं सव्वेसिं' इति ।
शशि-गुणाक्षरयुताश्चँतुःशती प्रथमपीठतो वर्णाः ॥ ३२९

वलयाकृत्याऽऽलेख्या[1] यद्विवा नृपँदल-नभो-युँगपददलेषु ।
एकैँत्रिंशन्नव-गुँणपदस्थितिः मातभँणितयुता ॥ ३३०

"पणवो नमो भगवओ बाहुबलि पण्णासमणस्स" ।

"पणवो दुवारवग्गु-निवग्गु सुमणे तहेव सोमणसे ।
महुमहुरे इरिकाली किरि पिरि सिरि हिरिजुया काली ॥ ३३१

"ॐ इरियाए किरियाए पिरियाए तहेव सिरियाए ।
हिरियाए [2]कालिजुगं महकाली पवण-गयणं च ॥" ३३२

गुँण-वेदँ-पँञ्च-रँस-मँद-जगदिन्दु-युँगाग्नि-वाँर्धि-युँगलं च ।
भूँत-गुँण-द्विकँ-वाँरिधि-पञ्च-चँतुःपँञ्चकं विपर्ययाः ॥ ३३३

वाँरिधिरँसँ-युँग्ममथैकोनँत्रिंशत्पदाक्षरैः प्रमितिः ।
गुण-चन्द्र-भूमिवँर्णोः द्विमस्थाने वलयलेख्यम् ॥ ३३४

इरिइरि किरिकिरि पिरिपिरि सिरिसिरि हिरिहिरि पए पए कालि ।
आयरियकालि पवणो गयणमिणं तइयपत्थाणं ॥ ३३५

1 °लेख्य यद्विवा J । 2 कलियुगं J ।

रसपट्क-युगं नगपदवर्णदिग्गज-गुणप्रमाणमिदम् ।
वलयाकृत्या लेख्यं प्राग्वद् देव्यादि सर्वत्र ॥ ३३६

'ॐ ह्रीँ इरिम्रुरसेलो इरिमेरु तहेव किरिमेरु ।
किरिकिरिमेरु गिरिनग गिरिगिरिमेरु य पिरिमेरु ॥ ३३७

'पिरिपिरिमेरु सिरिनगो सिरिसिरिमेरु तहेव हिरिमेरु ।
हिरिहिरिमेरु ॐ ह्रीँ श्रीँ अर्हँ आयरियमेरु ॥ ३३८

'मम सर्वसिद्धिमुच्चैः कुरु कुरु पवनो नमो'ऽथ पट्कोणे ।
अन्तर्वेद्विश्व सृष्ट्या लेख्यं मध्ये तदन्त्यपदम् ॥ ३३९

रस-पट्-युगान्तररसाः पडेवं युग्मं समुद्र-देव-युग[म्]
अष्टादशपदवर्णैस्तुर्ये पीठे चतुरशीतिः ॥ ३४०

सर्वमस्थानाक्षरसंयोगात् पञ्च-गुण-रसा वर्णाः ।
श्लोका नैवेन्दवस्त्विह वर्णाः संपतंगुणममिताः ॥ ३४१

[ ह्रीँकारस्वरूपम् — ]

प्रणवः प्रागुक्तार्थो मायावर्णोऽर्हदादिपञ्चकताम् ।
अन्तश्चतुरधिकविंशतिजिनस्वरूपमथो वक्ष्ये ॥ ३४२

अर्हन्तो वर्णान्तः रेफः सिद्धाः शिरश्च सूरिरिह ।
शुद्धकलोपाध्यायो दीर्घकला साधुरिति पञ्च ॥× ३४३

अर्हन् शशि-सुविधिजिनौ सिद्धाः पद्माभ-वासुपूज्यजिनौ ।
धर्माचार्याः षोडश मल्लिः पार्श्वोऽप्युपाध्यायः ॥* ३४४

---

× तुलना— षट्कला अरिहंता तिउणा सिद्धा य लोढकल सूरी ।
उवज्झाया सुद्धकला दीहकला साहुणो सुहया ॥१०॥
—नवकारसारथवणं ।

* तुलना— ससि-सुविहि अरहंता सिद्धा पउमाभ — वासुपुज्जजिणा ।
धम्मायरिया सोलस पासो मल्ली उवज्झाया ॥२॥
—नवकारसारथवण ।

सुव्रत-नेमी साधुस्तत्रार्हन् चन्द्रप्रभो रुजां शान्त्यै ।+
सिद्धाः सिन्दूराभास्त्रैलोक्यवशीकृतिं कुर्युः ॥ ३४५

सिद्धाक्षररेफाकृति वाग्बीजं वश्यमूर्ध्नि वदने वा ।
आज्ञाचक्रे[1] चारुणरोचिर्वश्यं तनोत्यथवा ॥ ३४६

आचार्याः स्वर्णनिभाः कुर्युर्जल-वह्नि-रिपुमुखस्तम्भम्† ।
सूर्यक्षरशीर्षाकृतिदण्डहता न स्युरुपसर्गाः ॥ ३४७

नीलाभोपाध्यायो लाभार्थं* शुक्ल-नीलकृद् यदिवा ।
अध्यापकार्द्धचान्द्री कलाऽऽत्मलाभाय [2]परगलके ॥ ३४८

कृष्णरुचः [3]साधुजिनाः क्रूरदशोच्चाटमृत्युदाः शत्रोः§ ।
[4]साधू स्वरदीर्घकलाकृत्यङ्कुशमुद्रया हता रिपवः ॥ ३४९

अर्हन्नम्भः सिद्धस्तेजः सूरिः क्षितिः परे वायुः ।
साधुर्व्योमेत्यन्तर्मण्डलतत्त्वानुगं सदृग् ध्यानम् ॥ ३५०

'नादो'ऽर्हन् 'व्योम' मुनिः 'कला'ऽथ सिद्धाः 'शिरो हरः' सूरिः ।
'ई'कार उपाध्यायो मायायां प्राग्वदुत शेषम् ॥ ३५१

शशि-सुविधजिनौ नादो विन्दुर्मुनिसुव्रतो व्रती नेमी ।
उद्यचन्द्रकलातः सिद्धौ पद्माभ-वासुपूज्यजिनौ ॥ ३५२

वर्णान्तः सशिरो रः षोडश सूरीश्वरास्तथेकारः ।
पार्श्वौ मल्लिर्वाचक इदमपि न विरोधि पूर्ववद् भणितम् ॥ ३५३

एकैकोऽर्हत्प्रभृति शतादिवर्णानुगोऽनिशं ध्यातः ।
शान्त्यादिकर्मषट्कं करोति किन्त्वत्र दिङ्मात्रम् ॥ ३५४

1 °चक्रेऽप्यरुण° J । 2 परलोके J । 3 साधुजनाः J । 4 साध्वक्षर° J ।

+तुलना–सुव्वय-नेमी साहू ॥
मुक्ख खेयरपयवि अरहंता दिंतु पणयाण ॥३॥
तेलुक्कवसीकरणं मोह सिद्धा कुणंतु भुवणस्स ॥४॥
—नवकारसारथवण ।

† तुलना–जलजलणाई सोलस पयत्थ थंभंतु आयरिया ॥४॥
—नं० सा० थ० ।

* तुलना–इहलोइय लाभकरा उवज्झाया हुंतु सव्वभयहरणा ॥५॥
—नं० सा० थ० ।

§ तुलना–पावुच्चाडणताडणनिउणा साहू सया सरह ॥५॥
—नं० सा० थ० ।

परमेष्ठिपञ्चनिर्मितजिनमयमाचार्यमेरुमर्हन्तम् ।
त्रैलोक्य-श्रीबीजं सर्वं ध्यायति स सर्वज्ञः ॥ ३५५

षट्कोणाकृतिदेहे मध्ये नरमेरुसूर्यबिम्बस्थम् ।
यः सूरिमेरुमन्तः स्वं पश्यति सोऽपि सर्वज्ञः ॥ ३५६

शङ्खिन्यन्तःशुषिरितवंशाग्रविलासिमौलिमेरुमये ।
आचार्यमेरुरात्माऽर्हन्निन्दुबिम्बस्थः[1] ॥ ३५७

चन्द्रार्कचक्रसंगमसमरससिक्तं स्वमौलिमेरुस्थम् ।
यः सूरिमेरुमर्हं स्वं पश्यति सोऽत्र योगीन्द्रः ॥ ३५८

॥ इति श्रीसिंहतिलकसूरिकृते
मन्त्ररहस्ये त्रयोदशसुरा(देवा)द्रि-
रहस्यं प्रथमम् ॥

*

पञ्चमस्थानगतं त्रयोदशदेवाद्रिरहस्यम् ।

त्र्यधिदशसुराद्रिसंगतपञ्चमस्थानमन्त्रमथ वक्ष्ये ।
मन्त्रादौ पाठे स्तुतिपदानि यावन्ति तावन्ति ॥ ३५९

पूजाऽर्हेऽथ यन्त्रे सूर्यमिताष्टाधिदशपदी वा स्यात् ।
विद्यापीठं षोडशवलयैर्लेख्यं तु 'सिज्झउ'पदान्तम् ॥ ३६०

तनाष्टादशपद्यां त्रि-तुर्यवलकेऽथ नवम-दशमे वा ।
प्रत्येकं पदयुगलं अन्त्यालोपोऽन्तिमे वलये ॥ ३६१

धारेसपयाइं पणवो नमो जिणे नमोहि ये जिणाणं ।
परमोहिजिणाणं तह नमो अणंतोहि य जिणाणं ॥ ३६२

'एवमणंताणंतोहिजिणाण नमो तहा नमोपुव्वं ।
सामन्नकेवलीणं भवत्थकेवलीण, तेसिं नमो ॥ ३६३

'उग्गतवचरणचारीणमेवमिचो नमो नमो होइ ।
चउदस-दसपुव्वीणं नमो तहेक्कारसंगीणं ॥ ३६४

---

1 °बिम्बस्थम् A ।

"एएसिं सव्वेसिं एवं किच्चा अहं नमोक्कारं ।
जं इयं विज्जं पउंजे सा मे विज्जा पसिज्जेज्जा स्वाहा ॥" ३६५

रस-गज-दश-दश-सूर्या दश-दश-रुद्रास्त्रयैक-शून्यैकम् ।
मद-नन्दाः सर्वाग्रं सप्तदशाधिकैशतं वर्णाः ॥ ३६६

'एएसिं॰'इत्याद्यैर्नवद्विकैः संगता रस-युगैर्काः ।
'स्वाहा'न्तैरप्यथवा गज-युगेन्दुवः प्रथमपीठे स्युः ॥ ३६७

"पणवो नमो भगवओ बाहुबलिस्सेह पण्हसमणस्स ।
सुमणे[1] सोमणसेवि य सिज्झउ[2] मे भगवइ [3]महई विज्जा स्वाहा ॥" ३६८

गुण-वेदाक्षे-रसेन्द्रिय-लोकैके-युगाब्धि-वार्द्धि-युगलमिति ।
एकादशपदवर्णाः शून्य-युगा वलयतो लेख्याः ॥ ३६९

"पणवो दुवारवग्गु दुनिवग्गु सुमणे य[4] सोमणसे ।
महुमहुरे इरिकाली किरिकाली तह य गिरिकाली ॥ ३७०

"सिरिकाली पिरिकाली हिरिकाली तह य चेव इरियाए ।
किरियाए गिरियाए पिरियाए तह य सिरियाए ॥ ३७१

"हरियाए कालीकाली महकाली पवण-गयणमह अंते ।"
इगुणीसपए सोलसवलयेहिं तइयपत्थाणं ॥ ३७२

इन्द्रिय-रस-गुण-वारिधि-पञ्चकमथ वारिधित्रयोदशकम् ।
पदमीभिर्वर्णमिति सैकाशीतिस्तृतीये स्यात् ॥ ३७३

"इरिइरिकाली किरिकिरिकाली गिरिगिरि पिरिपिरि सिरिसिरि य ।
हिरिहिरि य जुया य काली आयरियकाली मरु-गयणं ॥" ३७४

आद्यपदेषु षट्स्वपि प्रतिपदंषट्कं परे पदे च गजाः ।
सप्तनवा युग-पञ्चकैर्वर्णा वलयाभितो न्यस्याः ॥ ३७५

'इरिमेरु-इरिनग-किरिमेरु किरिकिरिमेरु 'गिरिमेरु इति ।
गिरिगिरिमेरु 'पिरिनग 'पिरिपिरिमेरु तहेव 'सिरिमेरु ॥ ३७६

---

1 'ले सुगमासा सि' J ।   2 'उ महंम' J ।   3 महइ महाविज्जा J ।
4 व सुम' J ।

'सिरिसिरिमेरु हिरिनग-हिरिहिरिमेरु तहेव आयरिय ।
मेरु मरु-गयणमंतो' पणवाई इत्थ न हु गणिया ॥ ३७७

चतुरन्तररसपट्कं गजास्तु वर्णा इहाष्टषष्टिरभूत् ।
पञ्चप्रस्थानाक्षरसंयोगाद् गगन-गज-लोकाः ॥ ३७८

एकादश च श्लोका वर्णा अष्टद्विकं सकलमन्त्रे ।
अष्टादशपद्यामपि विचार्य कार्याक्षरैः संख्या ॥ ३७९

॥ इति श्रीसिंहतिलकसूरिविरचिते
मन्त्रराजरहस्ये पञ्चप्रस्थानगत-
त्रयोदशसुराद्रिरहस्यमिदम् ॥

*

षोडशपदैः प्रथमप्रस्थानम् ।

षट्कोणान्तर्बीजं बहिस्थमेरुपदषट्कमथ वलयैः ।
वेदमितैश्च नृपस्तुतिपदपूर्वं मन्त्रमालिखति ॥ ३८०

षोडशदलप्रतिपदं 'ॐ ह्रीं 'पूर्वमदाग्रतः प्रणवः ।
कूटः स्वाहाऽन्त्यपदद्वये तु कूटाक्षरो नास्ति ॥ ३८१

जे-हे-पै-सं-के-यं-भै-चं-श्रं-ठोक्षरेषु सकलवर्यङं च संपिडयम् ।
शेषपदेषु त्रिष्वपि क्रमेण कूटत्रयं प्रथमम् ॥ ३८२

'नमो जिनोवधिजिना परमानन्तादनन्तयुगसर्वान् ।
अवधिजिना सवकेवल्यसवत्यकेवलिन इत्येव ॥ ३८३

'कोष्ठाग्रबुद्धिः पदकानुसारि-संभिन्नशब्दतः श्रोतः ।
उग्रतपश्चरणजुपः चतुर्दशपदाग्रतः पूर्वी ॥ ३८४

'एकादशाङ्गिपदके कूटस्थानेऽथवा वः ऐं क्लीं नमः ।
क्लीं श्रीं क्रुं सुं स्वाहा'न्ते 'श्रुतकेवलिनः पुरस्त्वकूटपदे ॥ ३८५

'माया-लक्ष्मी-वाणी ईं ह्रीं ह्रूं स्वा-नम'श्च यद्दिवाऽऽद्ये ।
'प्रणवात् जां जां कूटः स्वाहा' यद्वा न कूटोऽत्र ॥ ३८६

'प्रणवो मायैतेभ्यः कृत्वाऽथ नमश्च यामिमां विद्याम् ।
प्रयुनज्मि च सा विद्या मम सिध्यतु वायु-शून्यम'न्त्यदले ॥ ३८७

प्रथमस्थानमिदं विद्याष्टकगर्भितं परं कूटैः ।
यत् फलमिहान्यतस्तत् किन्त्वेकं सर्वसिद्धिबीजममी ॥ ३८८

॥ इति १६ पदैः प्रथमप्रस्थानम् ॥

*

षोडशपदैर्द्वितीयप्रस्थानम् ।

द्विप्रस्थाने प्रणवो मायाबीजं च षोडशपदादौ ।
सर्वत्र स्वाहान्ते कथयतः प्राकृतेनैतत् ॥ ३८९

'ॐ' ह्रीँ नमो भगवओ बाहुबलिस्सेह पँण्हसमणस्स ।
मँहपण्हाइ समणस्स सँयबलाइमवीरियस्स ॥ ३९०

'तह मँहबलस्स जोँहापरक्कमस्स य सँहस्समल्लस्स ।
अह मँहबाहुस्स मँहाबलपुरओ विक्कमस्से य ॥ ३९१

'वँग्गुं वग्गुं च महावग्गु निवग्गु सुँवग्गुजुयलं च ।
दुनिवँग्गुं वग्गुरिए मँहावग्गुरिए य विन्नेया ॥ ३९२

'भार्गुँरिए महभागुरिए मोहँरिए तह महाइमोहरिए ।
सँम्मुमणे सोमणसे महुमहुरे' दुईयपत्थाणं ॥ ३९३

बाहुबलिविशेषमिति नवकान्ते सिद्धयतां भगवती मम ।
महतीह महाविद्या स्वाहान्ता वग्गुमित्यादि ॥ ३९४

श्रीनाभेयपदाम्बुजमनागतस्यास्य यच्चतुर्ज्ञानम् ।
तद्भवविशेषणैरिह शेषपदैः केवलज्ञानम् ॥ ३९५

इह वा भगवानर्हन् विरतिजुषस्तस्य बाहुबल्यादि ।
पदनवकं तु विशेषणमते च जैनी चतुर्ज्ञानी ॥ ३९६

बाहुबलि-प्राज्ञमुन्योर्मतिज्ञानं तृतीयपदम् ।
श्रुतज्ञानद्वयमवधिः शेषपदैः वेदमितैः स्यान्मनोज्ञानम् ॥ ३९७

वग्गुचतुष्कं षट्पदमहुमहुरे तं केवलज्ञानम् ।
महपण्हसमण अन्तं विद्याशेषं विशेषकरणम् ॥ ३९८

विजया-जयाऽपराजितनाम्नी विद्यासुरी जिनव्रतिनः ।
स्वप्ने आदेशकरी स्वदेश-परदेशयादिजयहेतुः ॥ ३९९

वग्गुप्रभृतिकविद्या किंशुकवर्णाऽथ षोडशसहस्रैः ।
जप्ता जनमोहकरी वचनेष्वप्रतिहतत्वाय ॥ ४००

॥ इति १६ पदैः द्वितीयप्रस्थानमिदम् ॥

*

षोडशपदैस्तृतीयप्रस्थानम् ।

षोडशदलप्रतिपदं आदौ 'ॐ ह्रीँ' तदन्ततः स्वाहा ।'
अष्टादिसप्तपद्के मायापुरतो विशेष इति ॥ ४०१

"ईं क्लीँ क्ष्मीँ क्ष्मीँ श्रीं श्रीँ द्रीं श्रीं श्रीँ अतः परं ह्रीं ह्रीँ ।"
एकैकमष्ट-नवमे द्वयं द्वयं शेषपञ्चपदे ॥ ४०२

"इरियाई महइरियाई किरियाई तह महाकिरियाई ।
गिरियाई महगिरियाई पिरियाई महापिरियाई ॥ ४०३

"सिरियाई महसिरियाई हिरियाई महाहिरियाई ।
आयरियाई एगा हरिकाली[1] किरिजुया काली ॥ ४०४

"गिरिकाली पिरिकाली सिरिकाली तह य चेव हिरिकाली ।
आयरियकालिजुत्ता काली काली महाकाली ॥" ४०५

॥ एवं १६ पदैस्तृतीयप्रस्थानमिदम् ॥

*

चतुर्थप्रस्थानम् ।

"किरिकिरिकाली गिरिगिरिकाली पिरिपिरि अओ परं काली ।
सिरिसिरिकाली हिरिहिरिकाली आयरियकाली य ॥" ४०६

1 'काली गिरि' J ।

पट्कोणवहिर्वलये पदपट्कं प्रतिपदं च पूर्वे स्यात् ।
प्रणवः स्वाहा प्रान्ते [1]तुर्ये पीठे इदं ज्ञेयम् ॥ ४०७

॥ इति चतुर्थप्रस्थानम् ॥

*

पञ्चमप्रस्थानम् ।

"किरिमेरुं गिरिमेरुं पिरिमेरुं सिरिनगं च हिरिमेरुं ।
आयरियमेरु पइपय आइ पणवो[2] पज्जंत मरु-गयणं ॥" ४०८

॥ इति पञ्चमप्रस्थानम् ॥

*

[ लेखनविधिवर्णनम् — ]

पट्कोण-बहिःकोणे प्रत्येकं मेरुपदमिदं लेख्यम् ।
ह्रिमेरुपदत्यक्तं नैतत्[3] प्रस्थानगणनायाम् ॥ ४०९

ह्स्रं ह्रीँ ह्स् ह्रीँ ह्स् ह्रैँ ह्स् ह्रूँ [4]ह्रूँ ह्रूँ पट्कोणान्तर्गताः पट्बीजाः ।
क्रमशो लेख्याः मेरुः [5]कूटयुतिकार्यतो ज्ञेया ॥ ४१०

शान्त्यादिकर्मपट्कं सितादिवर्णानुगाः सकूटनगाः ।
दिक्-कालासन-मुद्रायुक्ता जप्ता वितन्वन्ति ॥ ४११

[ ॐकाररहस्यम् — ]

प्रणवो [6]माया अर्हँ संपुटबीजत्रयं चतुःपीठात् ।
स्वामिन् ! इत्यथ नमो लेख्यं पट्कोणहृदयेषु ॥ ४१२

'अः' पृथिवी पीतरुचिः 'उ'व्योमतडित्प्रभाभिराक्रान्तम्[7] ।
'मः' स्वर्गकलाचन्द्रप्रभमिन्दुनभस्तत्परं ब्रह्म ॥ ४१३

[8]अउमो विष्णु-विधीशास्त्रिगुणाः सकलास्तु कृष्ण-पीत-सिताः ।
संसृतिरत्नाश्च निष्कलमभ्रं नादो जिनः सिद्धः ॥ ४१४

आलोकेनोपलम्भेन मुनित्वेन च साधितः ।
रत्नत्रयमयो ध्येयः प्रणवः सर्वसिद्धये ॥ ४१५

1 तुर्यपीठे J । 2 °वो तेय म° A । 3 नैव तत् J । 4 ह्रूँ क्रूँ J । 5 कूट-स्तुति° J । 6 मायाऽर्हं J । 7 °भामिरा° J । 8 अउमा वि° A ।

या 'उँ' इत्यन्तरामाणशब्दो यः स्यात् तदुद्भवम् ।
शब्दब्रह्मेत्यसौ युक्तं वाचकः परमेष्ठिनाम् ॥ ४१६

[1]इत्युक्त्या हृत्कमले प्रणवं मध्यस्थसूरिमेरुजिनम् ।
स्वर-कादिवर्णयुक्तं यो ध्यायति कुम्भकेन शशिवर्णम् ॥ ४१७

सिन्दूर-सुवर्णाभं श्यामारुणवर्णाभं क्रमादेषः ।
शान्तिः क्षोभं स्तोभं द्वेषं वैश्यं तनोति जन्तूनाम् ॥ ४१८

यस्तु द्वादशसहस्रं सामान्यात् प्रणवे जपम् ।
कुर्यात् तस्य परं ब्रह्म स्फुटं द्वादशमासतः ॥ ४१९

अर्धबिम्बद्वये सायं प्राणायामत्रयं मुनिः ।
षट्त्रिंशत्प्रणवाभ्यासात् कुर्याद् [2]द्वादशकत्रयात् ॥ ४२०

ईडाया पूरणं [3]सूर्ये रेचनं कुम्भकेऽन्तरे ।
हृदि द्विषट्पदाम्भोजे सन्ध्याविधिरयं स्मृतः ॥ ४२१

सूर्योपस्थानमेतत् तु तदेतदर्घमर्पणम् ।
एतदेव महासन्ध्या नैवान्यत् किञ्चिदस्त्यतः ॥ ४२२

षष्ट्या गुर्वक्षरैर्वारि पलं षष्ट्या पलैर्घटी ।
षष्ट्या गुर्वक्षराङ्कोऽयं त्रिसहस्री[4] सषट्शती ॥ ४२३

अहोरात्रघटीषष्टिगुणा लक्षयुग तथा ।
सहस्राः षोडशेत्यन्तःप्रणवाद्जपा[5] मुनेः ॥ ४२४

[6]घट्या गुर्वक्षरमिता उच्छ्वासाः(३६०) स तु एककः ।
दशप्रणवजा(? जः)स्तेन[7] प्राणायामा घटीभवाः ॥ ४२५

त्रिशतीं सह षष्ट्या स्याद् दशप्रणवजा मुनिः (?नेः) ।
सन्ध्यातो याति नोच्छ्वासः परमेष्ठिस्मृतिं विना ॥ ४२६

परमेष्ठिमयो रत्नमयः सर्वमहोमयः ।
प्रणवः सूरिमन्त्रादौ गौतमस्वामिना कृतः ॥ ४२७

---

1 इत्युक्त्वा हृत॰ J । 2 द्वादशमासकत्रयात् J । 3 सूर्यरेचनं J । 4 °स्री षट् शती A । 5 प्रणवा जपा J । 6 घट्यां J । 7 आतेन J ।

[ ह्रीँकाररहस्यम् – ]

वृत्ताकृतीरर्हन्तस्त्रिकोणसिद्धास्तु शीर्षकं सूरिः ।
वाचक इन्दुकलाऽर्धं दीर्घकला साधुरिति पञ्च ॥ ४२८

शीर्ष-मुख-कण्ठ-हृदय-क्रमगतमात्मानमन्यदेहिगतम्[1] ।
अर्हत्-सिद्धाचार्योपाध्याय[2]-मुनिपदं तु रक्षायै ॥ ४२९

अर्हन् भूमिर्नभः सिद्धास्तेजः सूरिः परे पयः ।
वायुः [3]साधुरतो मायाबीजान्तस्तत्त्वपञ्चकम् ॥ ४३०

पृथ्वी धर्मस्य पदं वारि-नभश्चापि शुक्लबीजमिह ।
तैजसमार्तध्यानं मरुत् तथा रौद्रबीजं स्यात् ॥ ४३१

चन्द्र-कुजावर्हन्तः सिद्धाश्च बुधो बृहस्पतिः सूरिः ।
शुक्रो वाचक एवं मुनिरर्क-शनी ग्रहास्तत्र ॥ ४३२

नादोऽर्हन्नेतदधः शून्यं व्योमश्रिता ग्रहाः सप्त ।
इति नादार्हद्ध्यानात् सर्वग्रहभूतशान्तिरिह ॥ ४३३

अर्हत्-सिद्धाचार्योपाध्याय-मुनीन्द्रसंस्थितास्तिथयः ।
नन्दाद्याः पञ्चामूः [4]क्रमतस्तिथिशान्तिकं प्राग्वत् ॥ ४३४

चन्द्राभः [5]शशिशान्त्यै कुजस्य पद्मप्रभो गुरोः शान्तिः ।
सूर्यस्य नाभिभूरथ [6]वीरो राहोश्च शान्तिकृते ॥ ४३५

मन्दस्य श्रीपार्श्वो बुधस्य नेमिश्च शान्तये तदिह ।
मायाबीजे तत्र स्थाने [7]देवं ग्रहं च तत् ध्यायेत् ॥ ४३६

॥ इति शान्तिकम् ॥

*

कुण्डलिनी भुजगाकृति(ती) रेफाश्रितदः शिरः स तु प्राणः ।
तच्छक्तिर्दीर्घकला माया तद्वेष्टितं जगद्वश्यम् ॥ ४३७

नाभौ हृदये कण्ठे आज्ञाचक्रेऽथ योनिमध्ये वा ।
सिन्दूरारुणमायाबीजध्यानाज्जगद्वश्यम् ॥ ४३८

1 देहगतं J । 2 °ध्यायसाधिपदं J । 3 साधुरितो J । 4 °क्रमतः शा° A ।
5 शशिशान्तौ A । 6 वीरे राहोश्च J । 7 देवग्रह न तद् ध्यायेत् J ।

भागवद् वर्णानुगतं मायाबीजं विशिष्टकार्यकरम् ।
मायः शिरस्त्रिकोणे वश्यकरं कामबीजवत् ॥ ४३९

हः शम्भुः सेन्दुकलो ब्रह्मा रस्तुर्यकः स्वरो विष्णुः ।
संसृतिरस्या बिन्दुं दत्त्वा नादो विभात्यर्हन् ॥ ४४०

वर्णान्तः पार्श्वजिनः कला फणा बिन्दुरत्ननादमहः ।
नागो र ई तु पद्मा तत्रार्हन् संरिमेरुमयः ॥ ४४१

वारि-घट-पत्र-यन्त्रे मूर्द्धनि भाले सुपुष्प-नैवेद्यैः
संपूज्यामुं जापः करपर्वभिरब्जबीजाद्यैः ॥ ४४२

मायाबीजं लक्ष्यं परमेष्ठि-जिनौलि-रत्नरूपं यः ।
ध्यायत्यन्तर्वीरं हृदि स श्रीगौतमः सुधर्मोऽथ ॥ ४४३

॥ इति मायाबीजम् ॥

*

[ अर्हंकाररहस्यम् – ]

आद्यं हान्तं शब्दब्रह्मोदूर्ध्वाधो 'र'तस्त्रिरत्नयुतम् ।
चन्द्रकला सिद्धपदं बिन्दुनिभोऽनाहतः सोऽर्हन्+ ॥ ४४४
षोडश चतुरधिविंशतिरष्टौ नाभौ दलानि ‡हृदि मूर्ध्नि
आद्यं हान्तं वर्णाः शरदिन्दुकला-नभःप्रभवाः‡ ॥ ४४५

नादस्त्वात्मोदूर्ध्वाधो रेफाज्जिनरत्नयुक्त इत्यर्हम्[1] ।
हस्पोऽन्तर्ब्रह्माब्जं नाभ्यन्तःशक्तिकुण्डलिनी ॥ ४४६

---

1 इत्यर्हम् J ।

+तुलना– यद्वा मन्त्राधिप धीमान् ऊर्ध्वाधोरेफसंयुतम् ।
कला-बिन्दुसमाक्रान्तमनाहतयुत तथा ॥
— हेमचन्द्राचार्य, योगशास्त्र प्र० ८, श्लो० १८।

‡तुलना– "तत्र षोडशपत्राढ्ये नाभिकन्दगतेऽम्बुजे ।
स्वरमालां यथापत्र भ्रमन्तीं परिचिन्तयेत् ॥
चतुर्विंशतिपत्र च हृदि पद्मं सकर्णिकम् ।
वर्णान् यथाक्रम तत्र चिन्तयेत् पञ्चविंशतिम् ॥
वक्त्राब्जेऽष्टदले वर्णाष्टकमन्यत् ततः स्मरेत् ।
संस्मरन् मातृकामेन स्याच्छ्रुतज्ञानपारगः ॥"
— हेम० योग० प्र० ८, श्लो० २८४।

इति सर्ववर्णमूर्तिं अर्हँ सर्वमेरुगतमन्तः ।
ध्यायन् सूरिः सकलागमार्थवक्ता[1] गतभ्रान्तिः ॥ ४४७

उक्तं च –

कमलदलोदरमध्ये ध्यायेद् वर्णाननादिसंसिद्धान् ।
नष्टादिविषयबोधो ध्यातुः संपद्यते कालात्+ ॥ ४४८

अर्हँजपात् क्षयमरोचकमग्निमान्द्यं
कुष्ठोदरात्मकसन-श्वसनानि हन्ति ।
प्राप्नोति चाप्रतिमवाग् महतीं महद्भ्यः
पूजां परत्र च गतिं पुरुषोत्तमाप्ताम्* ॥ ४४९

अपि च,

कनककमलगर्भे कर्णिकायां निषण्णं
विगततमसमर्हँ सान्द्रचन्द्रांशुगौरम् ।
गगनमनुसरन्तं सञ्चरन्तं हरित्सु
स्मर जिनपतिकल्पं मन्त्रराजं यतीन्द्र ! ॥ ४५०

इति सर्वगं ध्यायन्नर्हँ इत्येकमानसः ।
स्वप्नेऽपि तन्मयो योगी किञ्चिदन्यन्न पश्यति ॥ ४५१

अर्हँ लक्ष्यीकृत्य ध्यायन् नादादिविच्युतौ शशिनम् ।
यद्वर्णमात्रमक्षरभावोज्झितमीरितुं शक्यम् ॥ ४५२

पश्यत्यनाहताभिधदेवोऽसौ सूक्ष्मलक्ष्यगतः ।
तस्माच्च गलितलक्ष्यो ज्योतिर्मयमीक्षते विश्वम् ॥ युग्मम् ॥ ४५३

मन्त्रराजसमुद्भूतानाहतस्थितचेतसः ।
सिद्ध्यन्ति सिद्धयः सर्वाः अणिमाद्याः [2]स्वयं यतेः ॥ ४५४

---

1 °गमा[न्] श्रुतार्थवक्ता J । 2 स्वय यत J ।

+ज्ञानार्णवः, प्रकरणम् ३८, श्लो॰ १ ।

*ज्ञानार्णवः प्रकरणम् ३८, श्लो॰ ३ ।

तुलना– "लक्ष्यान्तानित्यं वर्णमात्रार्धपुरस्सरम् ।
रेखाक्रान्तं कला-बिन्दुरम्यं प्रत्येकनिर्मलम् ॥"
—हेम॰ योग॰ प्र॰ ८, श्लो॰ ८।

इति पिण्डस्थिति-पदगत-रूपाश्रित-रूपवर्जिताभ्यासात् ।
अर्ह मेरुध्यातुस्तत्तद्भवसिद्धिसाम्राज्यम् ॥ ४५५

अकारः श्रीपतिः सान्तः सेन्दुः शम्भुर्विधिश्च रः ।
ऊर्ध्वमेतन्नभोलोकस्तदन्तेऽनाहतो जिनः ॥ ४५६

अर्ह त्रैलोक्यपूज्यत्वादनन्तसदया जिनाः ।
सद्रत्नत्रयभाजस्तदर्ह [1]सर्वज्ञबीजकम् ॥ ४५७

अथवा,

वर्णान्तः श्रीवीरो रेफः सिंहासनं तु चन्द्रकला ।
रुचिदण्डच्छत्रत्रयमभ्रं कलशोऽस्य नादशिखा ॥ ४५८

वर्णान्तस्तीर्थकरस्त्रिकोणकोटीरमथ सिताशुकला ।
सर्वत्र शीतलेश्या शून्यं शुक्लं ततः परं सिद्धिः ॥ ४५९

रेफद्वयाद्यमयुतं तथोर्ध्वरेफमधःस्थरेफं वा ।
अव्यक्तसान्तबीज मन्त्रतनुर्जिनपतिः साक्षात् ॥ ४६०

त्रैलोक्यवर्तिशाश्वतजिनदर्शन-पूजन-स्तुतिभवेन ।
जिनपतिबीजाष्टशतं स्मरन् फलेन स्वयं त्रियते ॥ ४६१

प्रणवे मायाबीजे जिनपतिबीजेऽथ सूरिमन्त्रमये ।
प्राणायामनितयान त्रिकालसंध्याविधिः सूरेः ॥ ४६२

षट्कोणान्तर्हरि-विधि-शम्भुस्थितबीजमध्यगतमाया ।
अन्तःप्रणवः सूरेर्मन्त्रोऽसौ वर्धमानविद्या च ॥ ४६३

एतेन वर्धमानविद्याधिष्ठितषट्कोणयन्त्रविधिर्दर्शितः,
स च वर्धमानविद्याकल्पे दर्शयिष्यते ।
एजद्बीजत्रितयं यथास्थितं वेत्ति तीर्थकृत् तदनु ।
श्रीगौतमस्ततोऽन्यो यदि वेत्ति स गौतमप्रतिमः ॥ ४६४

॥ षट्कोणसंगतं षड्देवाद्रिरहस्यम् ॥

*

---

1 सर्वबीजकम् J ।

[ पीठचतुष्कम् – ]

षट्कोणमेरुवर्जितपीठचतुष्कं तु यन्त्रलिखितमिह ।
षट्कोणदेहसंगतपीठचतुष्कं परं वच्मि ॥ ४६५

वङ्क्षादिनालिमूलान्तरालमार्गोऽङ्गुलानि नव यावत् ।
आधारचक्रमन्तः पूर्णगिरिः पञ्चमाङ्गुलकम्[1] ॥ ४६६

पूर्णगिरेरुत्थितमुड्डियाणमेकाङ्गुलादधो नाभेः ।
कन्दस्तस्य युडं पृथु यावत् तदनाहतं चक्रम् ॥ ४६७

पीठमिह कामरूपं तस्मिन् पञ्चाक्षशाखिकास्तासु ।
सुरूपा मनसः षष्ठी नालान्यपि ताः क्वचिच्छास्त्रे ॥ ४६८

श्रवणाद्यक्षद्वारे व्यक्ते जालन्धरं च तन्मूलान् ।
आज्ञाचक्रं यावन्मध्ये संख्याऽथ रसगुणाङ्गुलयः॥ विशेषणकम्॥ ४६९

अन्यत्रैवं पीठचतुष्कमुक्तम् –

उड्डीयाणं नाभौ हृदये जालन्धरं तथा कण्ठे ।
कामाग्ररूपपीठं मूर्धान्तः पूर्णगिरिपीठम् ॥ ४७०

जैनी पेरादिशक्तिः पश्यन्ती मध्यमाऽथ वैखरिका ।
द्विप्रहरीं यावत् क्रमशः पीठे दिनोदयतः ॥ ४७१

निःस्पन्दमनसि मन्त्रः प्रथमा तत्रार्थहेतुः पश्यन्ती ।
हृदये वर्णोत्पत्तिर्मध्यमिका शब्दभृत् तुर्या ॥ ४७२

शब्दाज्जापो मौनस्तस्मात् सार्थस्ततोऽपि चित्तस्थः ।
श्रेयानिह यदिवात्मध्येयैक्यं जापसर्वस्वम् ॥ ४७३

[2]इत्युक्त्वा देहपीठस्वामी [3]हंसः मेरुगातिरर्हन् ।
स प्रणवः स तु मायाबीजं तस्मै नमस्त्रेधम् ॥ ४७४

एतज्जापात् सूरिर्गौतमलब्धिप्रभाभिरुत्तेजाः ।
देवासुर-दनुजेन्द्रैर्वन्द्योऽथ त्रिभवशिवगामी ॥ ४७५

1. माङ्गुलिकम् J । 2 इत्युक्तदेह A । 3 हंसः सुमेरु A ।

एतन्मन्त्रमभयाऽऽक्रान्तसूरिगिराऽतिशयसिद्धः ।
डे-रं-ले-कें-शे-हं-याँ-ऽहि-रिपुप्रभृतिभयात् संरक्षाकृत् ॥ ४७६

वक्ष्येऽथ यन्त्रलेखनशेषं कोणद्वयोत्थरेखान्ते ।
ऊर्ध्वाधो रुद्रायुधचतुष्टयं प्रति तदेकैकम् ॥ ४७७

"मध्ये पार्श्वद्वितये हे-यं-क्षंपिण्डास्तदन्त एकैकम् ।
ॐ ह्रीँ पूर्वे तु जये जयं कुरु-कुरुयुगं स्वाहा ॥" ४७८

"प्रणवो माया अपराजिते तदपराजितं कुरु प्राग्वत् ।
ऊर्ध्वे ॐ ह्रीँ विजये विजयं कुरु-कुरुयुगं स्वाहा ॥" ४७९

*"ॐ ह्रीँ आदि जयन्ती विजयं कुरु कुरु [1]ततः परं स्वाहा ।"*
मायाबीजावेष्टनमस्मः क्षितिमण्डलं तदनु ॥ विशेषणकम् ॥ ४८०

विशेषस्थायम् —

प्रागुक्तद्वात्रिंशत्स्तुतिपदपर्यन्ततः क्रमात् कायाः ।
क्षान्ता क्ष-ह्री त्यक्त्वाऽमी कूटाः कार्ये महति योज्याः ॥ ४८१

द्वात्रिंशत्स्तुतिपद्यष्टपद्यां कायक्षरत्रयम् ।
यवर्गः सान्त इत्यष्टपिण्डाः सिद्धयष्टबीजकम् ॥ ४८२

अणिमा महिमा लघिमा गरिमेशित्वं वशित्वं मौं महतिः ।
प्राकाम्यमष्टसिद्धेर्बीजं हः स इति पिण्डयुगम् ॥ युग्मम् ॥ ४८३

[2]वारुणमब्धिर्मण्डलब्धिर्यन्त्र भूमिस्तदन्तरो मेरुः ।
यमकूटे तत्रार्हन् माया प्रणवासनाऽऽसीना ॥ ४८४

पीठचतुर्वर्तिसुरप्रणतः सचन्द्र-सूर्यनमः[3] ।
यः सोऽहं रत्नयुतेरित्येके सूरिरप्यर्हन् ॥ युग्मम् ॥ ४८५

*

सर्वत्राद्यन्तबीजाढ्यः प्रोक्तो मन्त्रः पुराऽधुना ।
अस्यैव स्वल्पबीजस्य वर्णैः श्लोकप्रमा ध्रुवे ॥ ४८६

1 ततः स्व-परं J । 2 वारुणमण्डलब्धियन्त्रभूमिस्तदन्तरो मेरु J । 3 सूर्यनिभा J ।

'ॐ ह्रीँ जिणाणं[1] ओहिजिणे[2] परमोहिजिणे[3] ।
तहणंतोहिजिणाणं[4] अणंतणंतोहि य जिणाणं[5] ॥ ४८७

'सामन्नकेवलीणं[6] भवाँभवत्थाइकेवलिणो[7] ।
कुट्ठाईबुद्धीणं[8] पयाणुसारी[10] संभिन्नसोयाणं[11] ॥ ४८८

'उग्गतवचरणचारी[12] चउदसपुव्वी[13] य दसपुव्वी[14] ।
इक्कारस अंगीणं[15] सुयकेवलिणो[16] एएसिं सव्वेसिं ॥
इच्चाई पुव्विं पिव मरु नह अन्तं' पढमपीढम् ॥ ४८९

॥ इति प्रथमपीठम् ॥

*

"ॐ' ह्रीँ नमो भगवओ बाहुबलिस्सेह पंण्हसमणस्स ।
मंहपक्काइमसमणस्स सेयवलाइमवीरियस्स ॥ ४९०

"तह मंहवलस्स जोहा परक्कमस्स य संहस्समल्लस्स ।
तह मंहबाहुस्स महाबलपुरओ विक्कमस्से य ॥" ४९१

"वेग्गुं वग्गुं च महावग्गु निवेग्गु य सुवग्गुजुयलं च ।
दुंनिवग्गु बाग़ुरिए मंहावाग़ुरिए य विन्नेया ॥ ४९२

"भांगुरिए मँहाभागुरिए मोहरिए तह मंहाइमोहरिए ।
सँसुमणसे सोमणसे मंहुमहुरे" दुईयपत्थाणं ॥ ४९३

॥ इति द्वितीयपीठम् ॥

*

'ॐ' ह्रीँ इरियाइ महाईरिया किंरिया महाकिरियाई ।
गिंरियाइ महागिरिया पिंरियाइ महापिरियाई ॥ ४९४

'सिंरियाइ महासिरिया 'हिरियाइ तह मंहाइहिरियाई ।
आयरियाई ईरिकाली "किरिकाली तह य "गिरिकाली ॥ ४९५

'पिरिकाली "सिरिकाली "हिरिकाली आँयरियजुया काली ।
कौलीकाली य महाकाली' तईयं तु पीढमिणं ॥ ४९६

॥ इति तृतीयपीठम् ॥

*

'ॐ' ह्रीँ इरिइरिकाली 'गिरिगिरि 'पिरिपिरि सिंरिसिरि 'हिरिहिरि य।
आयरिय आयरिय पइपय काली' पीढं तुरियमेयं ॥ ४९७

॥ इति चतुर्थपीठम् ॥

*

"ॐ माया किंरिमेरु गिंरिमेरु 'पिरि य मेरु 'सिरिमेरु।
'हिरिमेरु आयरियमेरु सव्वं ति मरु-गयणं ॥" ४९८

॥ इति पञ्चमपीठम् ॥

*

'पणवो मायावीयं जिणवीयं चउपीडसामिस्स।
नम एसो सव्वस्सं' भणियव्वो सकरणं तु ॥ ४९९

सप्ताद्रि-नन्द-नवकं रुद्राष्टौ नव-दश-सप्त-मद-करिणः।
सूर्या नव-सप्ताष्टाष्टाविति षोडशोत्थपदैः ॥ ५००

सप्तत्रिंशदधिशतं सर्वेषां प्रभृति मारुत-नभोऽन्तैः।
एकत्रिंशद्वर्णैर्युक्तमिभषडिन्द्रैर्वः प्रथमे ॥ युग्मम् ॥ ५०१

युग-वारिधि-पञ्च-रसा अष्टाष्टौ पञ्च सप्त षट् पञ्च।
गज-षड्-मुनि-षट्-षट्कं दशत्रयं-दिग्गजाक्षेयुगम् ॥ ५०२

इत्येकविंशतिपदैः षट्त्रिंशत्सेसाधिकं शतं वर्णाः।
यन्त्रे त्र षोडशपदान्येतैर्द्वैतं कृतं पीठम् ॥ ५०३

सूर्य-दशपञ्चकाक्षा युगषट्कं रस-पयोधि-गज [? युग] वर्णाः।
सप्ताधिशतं षोडशपदजैः पीठं तृतीयमिति ॥ ५०४

गज-रस-युगार्कवर्णैर्युगवारिधयस्तुरीयपीठमिति।
रस-युगवेदुष्कमष्टौ त्रिंशद्वर्णाः षडद्रिभवाः ॥ ५०५

प्रणवादिद्वादशकं वर्णा इति मन्त्रमूर्ध्नि सर्वत्र।
षट्कोणवीजसहिताः कार्ये योज्या न ते गणिताः ॥ ५०६

सर्वाक्षरसंयोगात् सप्तनवत्या युताश्चैतुःशतिकाः ।
श्लोका पञ्चदशास्मिन् वर्णाः सँप्ताधिदशकं स्युः ॥

॥ इति श्रीसिंहतिलकसूरिकृतमन्त्रराजरहस्ये
षट्कोणसंग[तं] षट्देवाद्रिरहस्यम् ॥

*

संक्षिप्तविशेषः ।

अथ पञ्चाद्रिवाचनायामवशेषमाह–

पणवो नमो जिणाणं ओहिजिणे परमओहिजिणे ।
तहणंतोहिजिणाणं केवलिचरमसरीराणं ॥ ५०८

उग्गतवचरणचारीणं चउदसपुव्वीणं तहेव दसपुव्वी ।
इक्कारस अंगीणं एएसिं पभइ पुव्वं वा ॥ ५०९

॥ इति विद्यापीठं प्रथमम् ॥

*

पणवो नमो भगवओ बाहुवलिस्सेह पण्हसमणस्स ।
ॐ वग्गु वग्गु दुनिवग्गु सुमण इवेय सोमणसे ॥ ५१०

महुमहुरे इरिकाली किरिकाली पिरि य कालि सिरिकाली ।
हिरिकाली आयरियकाली सोलस सहस्ससोहग्गं ॥ ५११

॥ इति द्वितीयपीठम् ॥

*

इरियाए किरियाए पिरिया सिरियाइ तह य हिरियाए ।
उवविज्जाए वारससहस्स रचीइ आएसो ॥ ५१२

पणवो ईरि किरि पिरि सिरि हिरि य आयरियकालि ।
पइपय दससाहस्से मासे वेरिक्खओ हवई ॥ ५१३

पणवाइ पंचमेरु पुव्वि सहस्स वारस य जावो ।
इवेकवग्गु सुमणो जइ खरीसो गोयम-सुहम्मो ॥ ५१४

पञ्चमस्थानाक्षरतः शतमेकं युगेकसप्तत्यौ ।
श्लोकास्तु पञ्च वर्णा एकादश सूरिमन्त्रेऽस्मिन् ॥ ५१५

मेरुक्रमपञ्चार्हत्सिद्धाद्या जे-मै-मे-हैं-क्षेपिण्डयुताः ।
उत्सर्गे पञ्चशतीकुसुमैः पार्श्वार्चना च तत् स्वप्नम् ॥ ५१६

॥ इति मन्त्रराजरहस्ये संक्षिप्तविशेषः ॥

*

उपविद्या मेरूज्झितगणधरमन्त्रो नभोऽम्बुधिस्तुतिकः ।
सर्वार्थसिद्धबीजं मन्त्रान्ते वलयतः कश्चिद्दृष्टः ॥ ५१७

पणवो नमो जिणाणं ओहिजिणे परमोहिजिणे ।
तहणंतोहिजिणाणं सुकुट्ठबुद्धीण बीयबुद्धीणं ॥ ५१८

पयअणुसारीण नमो संभिन्नसोय तह सयंबुद्धे ।
पत्तेयबुद्ध नमिमो उज्जुमई विउलमई नमिमो ॥ ५१९

चउद्दस-दसपुव्वीणं इक्कारसअंगि अट्ठ [ ? पुव्वाई ] ।
महानिमित्तकुसलाणं विउव्वणइड्ढिपत्ताणं ॥ ५२०

विज्जाहरसमणाणं चारणसमणाण पण्हसमणाणं ।
आगासगामि आसीविसाण दिट्ठिविसाणं च ॥ ५२१

उग्गतव-महतवाणं घोरगुणजुत्तबंभयारीणं ।
आमोसहि-विप्पोसहि-खेलोसहि-जल्लओसहिओ ॥ ५२२

सव्वोसहिपत्ताणं मणबलि-वयणबलि-कायबलि ।
खीर-घय-अमय-आसव-अक्खीण महाणसाइलद्धीणं ॥ ५२३

तह वद्धमाणबुद्धिसिरीण सिद्धायणाण सव्वेसिं ।
वेग्गुए तह फग्गु फग्गुए य तह सुमिणे ॥ ५२४

सोमणसे महुमहुरे किरिया पिरियाइ चेव सिरियाए ।
ओयरियाए किरिकिरिकाली पिरिपिरिजुया काली ॥ ५२५

सिरि सिरिकाली हिरिहिरिकाली तहा सिरिजुया काली ।
वेग्गु निवग्गु दुफग्गु निफग्गु दुसुमणे य सोमणसे ॥ ५२६

सोमैंमणे य जैंए तह विजैंए अैंजिए अैंपराजिए स्वाहा ।
सव्वक्खरेहिं चउँदस सिलोगवण्णा य नवदुग्गा ॥ ५२७

*

श्रीखण्डाश्चितकर्णः शुचिरपुरश्चोत्तरं शतं जप्त्वा ।
शून्ययुगस्तुतिमन्त्रःकार्यस्य शुभाशुभादेशः ॥ ५२८

प्राग्वत् स्तुतिफलमथवा प्रस्थानचतुष्टयोक्तमस्य तपः ।
आरभ्य विजयदशमीं यदिवा निर्विकृतिपञ्चयुगम् ॥ ५२९

इति सिद्धे जय-विजये सितपञ्चम्यां जिनं जयां विजयाम् ।
संपूज्याथाष्टशतं जापः स्वप्ने शुभादेशः ॥ ५३०

मृतवत्सु-काकवन्ध्या वन्ध्या-वररहित-दुर्भगस्त्रीषु ।
भूतात्त-बालक-नृप-द्विष्ट-मनुष्येषु शान्तिकं वच्मि ॥ ५३१

*

## पूजादिरहस्यम् ।

[ शान्तिकविधिः— ]

अपराह्णे देवगृहे शुचिदेशेऽथ त्रिवर्णचूर्णेन ।
चतुरस्रं द्वारचतुस्त्रिरेखमन्तर्दलाष्टाब्जम् ॥ ५३२

वज्रं मुद्गर-परशु-शक्ति संलिख्य पूर्वदिक् क्रमतः ।
अष्टदलेषु सदन्नैः सर्वैः पुञ्जान् पृथक् कृत्वा ॥ ५३३

तदुपरि कलशानष्टौ जलपूर्णान् मातुलिङ्गवस्त्रवृतान् ।
अन्तर्जिनवारियुताम्भःपूर्णं घटयुगं कृत्वा ॥ ५३४

अष्टोत्तरशतमेनं मन्त्रं परिजप्य सर्वमभिमन्त्र्य ।
दीप-फल-कुसुम-धूपाक्षत-वलिभिः सम्यगभ्यर्च्य ॥ ५३५

नववस्त्रेणाच्छाद्य रात्रौ यामेऽथ पश्चिमे विजने ।
नद्युभयतटी-घटकृत्-हस्ति-नृपद्वार-सप्तवल्मीकात् ॥ ५३६

धान्यसमृद्धक्षेत्रादानीय मृदं तु गात्रमनुलिप्य ।
तामेकदेशनग्नां नारीं मध्यैककुम्भजलैः ॥ ५३७

संस्नप्य कटीवासस्त्यक्त्वा सर्वाङ्गमन्यवस्त्रेण ।
पिहिता स्वगृहं नेया पृष्ठा लोकोज्झिता सा स्त्री ॥ ५३८

प्रातः सूर्योदयतः सूरिस्तन्मण्डले समभ्यर्च्य ।
मध्ये स्त्रियं निवेश्य च सप्तगृहद्वाररजस्तृणैस्ताम् ॥ ५३९

सप्तद्विकपक्षैरपि मन्त्रेणानेन वामहस्तेन ।
निर्भर्त्स्य प्राग्मृत्स्नाकृतपुत्रिकयाऽपि निर्भर्त्स्य ॥ ५४०

सर्वमुदूधृत्य चतुःपथेऽथ संस्थाप्य पूर्वमृत्तिकया ।
अनुलिप्य स्त्रीदेहं शेषघटाम्भोभिरभिमन्त्र्य ॥ ५४१

संस्नप्य सर्वरक्षां कृत्वाऽऽनयतेऽथ गृहं प्राग्वत् ।
तत्पश्चाल्लेपमस्या दातव्यं सूरिमन्त्रेण ॥ ५४२

एवमिह सप्तदिवसान् कार्यं सप्ताहि देवमुनिपूजाः ।
प्रागुक्तदोषरहिताः स्त्री-बालक-नृप-मनुष्याः स्युः ॥ ५४३

देश-पुर-ग्रामालय-जनमारिषु रक्तगुडवल्लरसाद्यैः ।
क्षेत्राधिपयक्षादिदेवताद्यैः कुर्यादेवम् ॥ ५४४

गो-स्त्री-नर-राज-मारिषु नगरबहिर्मण्डपे शुचिभूमौ ।
चन्द्रोदयसत्तोरणपवित्रितायां ब्रुवे शान्तिम् ॥ ५४५

*

कुङ्कुम-गोरोचनया गोमयरस-दुग्ध-मलयजरसेन ।
दूर्वा-सुवर्णशलाकालेखिन्या सूरियन्त्रमिदम् ॥ ५४६

नरभाजने विलेख्यं मध्ये प्रथमपूर्वं च शान्तिजिनम् ।
आरभ्य त्रिमधुरतः संपूर्य नवीनरागलताऽऽस्वाद्यम् ॥ ५४७

त्रिःसन्ध्यं जातिकुसुमैर्दिनत्रयं सूरिमन्त्रमष्टशतम् ।
जप्त्वा सपूजयेत् तत् सम्पूज्य नृपेऽह्नि पञ्चमके ॥ ५४८

अभिमन्त्र्य पूजयित्वा पश्चात् कृत्वा तदम्बुधाराभिः ।
अभिषिच्य राजमार्गे भूमिरथ-हस्ति-शिबिकोद्धर्वम् ॥ ५४९

सुवसनशृङ्गारितनरमूर्द्धनि कृत्वा जिनं सितच्छत्रम् ।
चमरैर्वीज्यमानं चन्द्रोदयशोभाभिः ॥ ५५०

आतोद्य-दीपसहितं शितायुधैः पौरुषैः परित्रातम् ।
संघान्वितेन गम्यं पुरमध्ये सूरिणा सुमन्त्रेण ॥ ५५१

तस्मिन्नह्नि न हिंसा सङ्घाय सुभोजनं प्रदातव्यम् ।
दीनानाथस्वागतमिति मन्त्रस्मरणतः शान्तिः ॥ ५५२

अस्तमने गोवेशे नगरगृहद्वार-वाटकद्वारे ।
श्राद्धा गाः सिञ्चेयुः कलशजलैस्तासु शान्तिविधिः ॥ ५५३

षट्कोणसूरियन्त्रे अप्रतिचक्रादियन्त्रमध्ये च ।
देशादिनाम लेख्यं चिन्त्याः शान्त्यै शशिप्रभा वर्णाः ॥ ५५४

गर्भादिस्तम्भविधिं वच्मि शिलापट्टकेऽथ भूर्जे वा ।
क्षीरद्रुमफलके वा चन्दनवर्जं प्रागुक्तसद्द्रव्यैः ॥ ५५५

*अष्टदलकमलकर्ण्यां 'ह्'पिण्डमध्येऽथ गर्भवत्याख्या ।
एवं दलाष्टकान्तर्वलये च जिनस्तुतीर्दत्त्वा ॥ ५५६

---

*तुलना- पद्ममष्टदलमध्ये 'ह्'पिण्ड तस्य चान्तरा ।
गर्भवत्या' स्त्रियो नाम प्रतिपत्र 'ह्'पिण्डकम् ॥ ३७ ॥
पद्मस्य बहिर्वलये गाथा 'धम्मेइ'' अग्रत' । ·
अमुकस्या· स्त्रियो गर्भं स्तम्भामीति लिखेदथ ॥ ३८ ॥
बहिर्भूमण्डलं दिक्षु 'ह्'पिण्डकाष्टमालिखेत् ।
शिलापट्टादिसपुट'य'घन बद्ध्वा शुचिक्षितौ ॥ ३९ ॥
त्रिसन्ध्यमष्टधाऽभ्यर्च्य जपेत् साष्टसहस्रकम् ।
यावद्वर्षार्द्धवर्षं वा गर्भं स्तम्भोऽयथा विधिः ॥ ४० ॥
एतद्भूर्जादिकं सिक्थकेनावेष्ट्य धृताम्बरा ।
अर्च्यते पूर्ववत् स्तम्भस्तत्र कार्ये समर्प्यते ॥ ४१ ॥
तत् समुद्धृत्य दुग्धेनाथ च गन्धाम्बुना स्मरन् ।
मन्त्र प्रक्षालयेदेव प्रसूते सा सुत सुखम् ॥ ४२ ॥
अग्निस्तम्भेऽष्टपत्रपद्ममध्ये दलान्तरा ।
'ग'पिण्ड बहिर्वलये गाथा सष्टयाऽपि लिख्यते ॥ ४३ ॥
भूमण्डलाष्टदिग्भागे ग'पिण्ड पूर्ववद् विधिः ।
जापः शत सहस्र चाऽग्निस्तम्भो धर्मदर्शिनाम् ॥ ४४ ॥
अष्टदलेऽम्बुजान्तश्च 'घ'पिण्डं वलये बहिः ।
गाथाभूमण्डलं दिक्षु 'घ'पिण्डं पूर्ववद् विधिः ॥ ४५।

मन्त्रस्यैकैकपदं शान्त्याद्यं कर्मषट्क्रमात्तनुते ।
दिक्-कालासन-मुद्रा-वर्णाचांभिस्तदिह वच्मि ॥ ५७४

विजितस्मररोषमना विकथात्यक्तो जिनांह्रिगुरुभक्तिः ।
अथ भीरुर्मितभोजी जितनिद्रः सूरिरिह शस्यः ॥ ५७५

अशनादिपञ्चमौनी शुचिः प्रसन्नो दृढव्रतो दक्षः ।
गुरुपदभक्तिर्बीजावहितमनाः शस्यते मन्त्री ॥ ५७६

स्तोकजलस्नाततनुः परिहितमानवसनवरसूरिः ।
एकान्तेऽतिपवित्रे निसन्ध्यमन्तः स्मरत्येवम् ॥ ५७७

'ॐ भूरसि भूताग्रे धात्रि ! भूम्यग्रशुद्धिमिह कुरु कुरु ।
स्वाहे'ति भूमिशुद्धिं विधाय करपल्लवाक्षेपात् ॥ ५७८

स्वाङ्गुष्ठादिक्रमतो भूतानि न्यस्य पञ्च शून्यानि ।
अर्हदादिपञ्चकं वा तैः कृतस्वाङ्गदिग्रक्षः ॥ ५७९

'ॐ ह्रीँ विमले तीर्थजले अशुचिः शुचिरथो भवामि स्वाहा ।'
मूर्ध्नि प्रभृतिकृते गङ्गास्नाने इव विगतपापः ॥ ५८०

यदिवा,

निजमौलिमेरुमूर्ध्नि क्षीरे सरित्रायपाथसा देवैः ।
संस्नापितो जिनेन्द्रस्तज्जलधौताङ्गकोऽथ निष्पापः ॥ ५८१

पूर्वाद्यष्टक्रमतः स्तम्भं दहनं च मृत्यु-विद्वेषौ ।
वश्योच्चाटन-शान्तिकर्मीशित्वं सर्वकर्माणि ॥ ५८२

पूर्वाद्यष्टक्रमतः स्तम्भ-द्वेषाववाकृष्टिं पुष्टिम् ।
शान्त्युच्चाटन-वश्यं मरणमिति केचिदप्याहुः ॥ ५८३

सूर्योदयादिचैत्राद्या मासाः पञ्चघटीप्रमाः ।
एवं दिवानिशं वर्षे वसन्तादिऋतुः स्मृतः ॥ ५८४

आकृष्टि-रैपोच्चाटन-मारण-पुष्टिश्च शान्तिकं क्रमशः ।
षड्ऋतुषु ज्ञेयमिदं यदिवैके कालविधिमाहुः ॥ ५८५

पूर्वाह्णे वश्यकर्माणि मध्याह्ने प्रीतिनाशनम् ।
उच्चाटनमपराह्णे सन्ध्याया मारणं स्मृतम् ॥ ५८६

शान्तिकमर्द्धरात्रे च प्रभाते पौष्टिकं तथा ।
वश्यं मुक्त्वाऽन्यकर्माणि सव्यहस्तेन योजयेत् ॥ ५८७

शान्तौ पुष्टौ मुक्तौ श्वेतं क्षोभेऽतिपीतमत्यरुणम् ।
वश्याकृष्टौ द्वेषोच्चाटे धूम्रं मृतौ महाकृष्णम् ॥ ५८८

ध्यानमिति शेषः ।

पार्थिवे स्तम्भनं पुष्टिर्वश्यं शान्तिर्जलात्मके ।
आग्नेये कर्षण दाहो वायौ द्वेष मृतिः परैः ॥ ५८९

वश्य बालस्वरे द्वैते आकृष्टिं च युवात्मके ।
शान्ति वश्य च पुष्टिं च द्वेषं-स्तम्भौ च वृद्धके ॥ ५९०

मृत्यु मृत्युस्वरे कुर्यात् आद्यपञ्चस्वरक्रमात् ।
बालादिकस्वरो ध्याता कार्यानुमितमानसः ॥ ५९१

नमोऽर्चनकाले होमे स्वाहा शान्तौ स्वधाऽऽकृष्टौ ।
वषट् क्षोभे सवौषट् भद्वेषे फडिति चे मृति ॥ ५९२

स्फटिक-प्रवाल-मुक्ता-चामीकर-पुत्रजीवमालाभिः ।
बीजैः पद्मोत्थैरथ शान्त्याद्युचितं जप कुर्यात् ॥ ५९३

पद्मासनाद्यमासनमथ मुद्राः सपरमेष्ठिमुद्राद्याः ।
सितपत्रादिभिरर्चा कुङ्कुम-गोरोचनादिभिर्लेख्यदलम् ॥ ५९४

सौवर्ण-रजत-कास्यजपात्र तत्रैव युज्यते साधोः ।
सङ्घस्य कार्यहेतोः सर्वं युज्येत नान्यत्र ॥ ५९५

प्रायोऽत्र सूरियन्त्रं महता कार्ये शुभे महति योज्यम् ।
तेन विलिख्य सुपात्रे कर्पूराद्यैरिदं पूज्यम् ॥ ५९६

पूरक-रेचकयोगादाह्वान-विसर्जने करोतु बुधः ।
पूजाभिमुखकरणस्थापनकर्माणि कुम्भकतः ॥ ५९७

क्षितिमण्डलेऽष्टदिक्षु 'ह'पिण्डमालिख्य संपुटीकृत्य ।
यद्ध्वा घनमेकान्ते त्रिसन्ध्यमभ्यर्च्य मन्त्रेण ॥ ५५७

यद्वाऽथ भूर्यमेतत् सिक्थकावेष्टयं घृतान्तरा पूज्यम् ।
गर्भस्तम्भः पयसा धौते तस्मिन् मसूतिः स्यात् ॥ ५५८

'पयसा' इति दुग्धेन जिनस्नपनगन्धोदकेन वा ।

पूर्ववत् पद्ममध्ये 'ग'पिण्डपिहिता च साधकस्याद्य ।
अष्टदलेषु 'ग'पिण्डान् स्तुतिवलयं क्षोणिमण्डलकम् ॥ ५५९

आशाष्टके 'ग'पिण्डं शिलान्तरे संपुटं तदेकान्ते ।
संपूज्य पुष्पमाला मण्डल-धूपैर्मलयजेनापि ॥ ५६०

पद्ममष्टदले 'फ्रौं' 'फ'पिण्डान्त साधकाभिधा ।
प्रतिपत्र 'फ'पिण्ड च गाथा स्याद् वलये बहि ॥ ४६ ॥

भूमण्डलाष्टदिग्भागे 'फ'पिण्ड पूर्ववत् क्रिया ।
जाप शत सहस्र वा तुल्या-दिव्यनिषेधनम् ॥ ४७ ॥

पद्ममष्टदल मध्ये ह्लौ' स्याद् 'ह'पिण्डमध्यगम् ।
साध्यनाम दलेऽप्यन्तः 'ह'पिण्ड वलये बहिः ॥ ४८ ॥

गाथाभूमण्डल दिक्षु 'ह'पिण्ड पूर्ववद् विधि ।
जाप शत सहस्र वा घट-सर्पनिषेधनम् ॥ ४९ ॥

पद्ममष्टदल मध्ये 'क्ष्रौं' 'क्ष'पिण्डमध्यगम् ।
साध्यनाम प्रतिपत्र 'क्ष'पिण्ड वलये बहि ॥ ५० ॥

गाथाभूमण्डल दिक्षु क्ष पिण्ड पूर्ववद् विधि ।
जाप शत सहस्र वा जयेत् पक्षादिजे विषम् ॥ ५१ ॥
पद्ममष्टदल गर्भे क्ष'पिण्ड साध्यनामयुक् ।
'क्ष'पिण्ड प्रतिपत्रान्त सगाथ वलय बहि ॥ ५२ ॥
भूमण्डलाष्टदिग्भागे क'पिण्ड पूर्ववत् क्रिया ।
जिह्वा[1]-रण[2]-गति[3]-क्रोधव्यवहारनिषेधनम् ॥ ५३ ॥
देश-ग्राम-पुरं यद्वा गृहस्यैकस्य वा गवाम् ।
शाकिन्यादिकृतां मारिं निषेद्धुमिह सुमती ॥ ५४ ॥
भूर्यादौ चक्रमालिख्य तद्दस्याद्यभिधायुतम् ।
कृत्वा रक्षां सिक्थकेनावेष्ट्य मन्त्राभिमन्त्रितम् ॥ ५५ ॥
कांस्यपात्रे लिखेत् शान्तिर्शतमाचरणामत ।
रक्षां तां त्रिमधुरेणाकण्ठ शान्ति तु पूरयेद् ॥ ५६ ॥

—श्रीसिंहतिलकसूरिकृत लघुनमस्कारचक्रम् ॥

अष्टशतमन्त्रजापो यद्वा भूर्जं तु सिक्थकावेष्ट्यम् ।
पूज्यं त्रिमधुरमध्ये वह्निस्तम्भो जिनार्चातः ॥ ५६१

पुनरष्टपत्रपद्मं 'ध'पिण्डपिहितं च साध्यनामान्तः ।
दलपिण्डेषु 'ध'पिण्डं वलये च जिनस्तुतीर्न्यस्य ॥ ५६२

क्षितिमण्डलमाशासु च 'ध'पिण्डमालिख्य पूर्ववत् पूजा ।
निस्तारयति जलापदि मन्त्रस्मृतितोऽम्बुशान्तिरियम् ॥ ५६३

अष्टदलपद्मगर्भे साधक-साध्याऽभिधे 'फ'पिण्डान्तः ।
'फों' वेष्टयमष्टदलगत'फ'पिण्डतो वलयगा जिनस्तुतयः ॥ ५६४

क्षितिमण्डलदिग्भागे 'फ'पिण्डमालिख्य पूर्ववत् पूजा ।
निस्तारयति तुलाग्निमदिव्यादिह सूरिमन्त्रेण ॥ ५६५

अष्टदलपद्मगर्भे 'ह्रौं'मध्ये साधको 'ह'पिण्डान्तः ।
अष्टदलेषु 'ह'पिण्डान् स्तुतिवलयं क्षोणिमण्डलगम् ॥ ५६६

आशाष्टके 'ह'पिण्डानालिख्य पुरे च सूरिमन्त्रेण ।
पूजा घटसर्पाभिधदिव्यान्निस्तारयत्येव ॥ ५६७

अष्टदलपद्मगर्भे 'क्ष्रौं'मध्ये साधकः 'क्ष'पिण्डस्थः ।
वलयं स्तुतयः पृथ्वीमण्डलमाशाष्टके 'क्ष'पिण्डांश्च ॥ ५६८

आलिख्याष्टाधिशतं जापो मन्त्रेण पूर्वरीत्याऽर्चा ।
सर्पादिविषं नश्यति विशेषतः स्थावरविषं च ॥ ५६९

पुनरष्टपत्रगर्भे 'क्ष'पिण्डमध्येऽथ साधकस्याह्वा ।
एवं दलेषु वलये स्तुतयः क्षितिमण्डलं तदनु ॥ ५७०

आशाष्टके 'क्ष'पिण्डानालिख्य पुनरेव मन्त्रजापार्चाम् ।
क्रोध-मुख-युद्ध-गमन-व्यवहारादेरपि स्तम्भः ॥ ५७१

स्तुतिवलयस्य प्रान्ते गर्भाद्यं स्तम्भयाम्यथ पूजयामि ।
लेख्यं मन्त्रस्यान्ते गर्भाद्यं स्तम्भयेः वाच्यम् ॥ ५७२

प्रणवो मायाबीजं जिनबीजमथैककं च पद्मान्तः ।
प्राग्वत् सर्वं तनुते गणभृन्मन्त्रेण किमिह कूटैस्तत् ॥ ५७३

प्रथमं बीजत्रितयं गणभृद्विधे समध्यमे च 'एहि'युगम् ।
संवौषडाह्वानमथासीत् 'तिष्ठ'द्वयं स्थाप्यम् ॥ ५९८

आदौ भाग्वन्मध्यात् 'संनिहिता मम भव'द्वयं संवषट् ।
पूजाऽथ कार्यमन्त्रात् सर्वस्माद् मेरुतोऽथ मध्याद् वा ॥ ५९९

'ॐ ह्रीँ गणभृद्विद्यायै सर्वत्र परमेष्ठिने स्वाहा' ।
वारि 'परमात्ममूर्त्यै स्वाहा' कर्पूरगन्धाद्यैः ॥ ६००

आदौ भाग्वत् स्वाहान्तेऽनादिनिधनात्मने तदक्षतकाः ।
सर्वसुरासुरपूजायै स्वाहा कुसुममप्यग्रे ॥ ६०१

तदनन्तज्ञान-दर्शन-वीर्य-सुखादात्मने मरुद्-व्योम्ने ।
नैवेद्य-दीप-धूपन-फलानि ढौक्यानि तत्क्रमतः ॥ ६०२

बीजत्रितयं गणभृद्विद्यायै मध्यतः 'ह्रीँ स्वकं स्थानम् ।
गच्छ'द्वयं विसर्गोचित'य'द्वन्द्वे भवेत् पूजा ॥ ६०३

मोक्षाऽभिचार-लक्ष्मी-शान्त्याकृष्टिक्रमेण जापविधौ ।
अङ्गुष्ठादिकनिष्ठां च यावद् धत्तेऽक्षसूत्रमसौ ॥ ६०४

स्तम्भेऽथ शान्ति-पुष्टी वश्ये उच्चाटने मृती क्रमतः ।
भूम्यादिमण्डलगतं साध्यं ध्यायति तदर्थकृते ॥ ६०५

पूर्वाह्णे मध्याह्ने मध्यनिशायां निशान्त्यके यामे ।
वश्यं स्तम्भं शान्तिं पुष्टिं कुर्यात् क्रमेणैषा ॥ ६०६

अथात्र मेरुगतवाचनान्तरमाह—

'पणवो नमो' पयाइसु 'जिणाण ओहिजिणे परमोहिजिणे ।
सव्वोहिअणंतोहिजिणाणं केवलिदुगं चउदसपुव्वी ॥ ६०७

दसपुव्वी इक्कारसंगीण उग्गतवचरणचारीणं ।
खीरासवलद्धीणं महोसवलद्धि-कुट्ठबुद्धीणं ॥

गोयमसामिस्स तहा सुहम्मसा[illegible] एसि सव्वे
इच्चाइ साहंतं सोलसपत्ता[illegible]ए ॥

'पणवो नमो० बाहुबलि०' द्विवलयाकृत्या लेख्यम् ।
'पणवो वेग्गू निवेग्गू वग्गू य सुमण-सोमणसे ।
महुमहुरे ईरिकाली गिरिकाली पिरिजुया काली ॥ ६१०
हिरिकाली सिरिकाली ईरिया गिरियाइ तहय पिरियाए ।
हिरियाए सिरियाए कालि महाकालि मरु-गयणं ॥' ६११

इति षोडशपत्राण्यङ्कत एव ज्ञेयानि ॥

'इरि किरि गिरि पिरि हिरि सिरि पत्तेयं कालि ।
इरि इरि य कालि किरि गिरि पिरि हिरि सिरिजुया काली ॥' ६१२

वलयाकृत्या लेख्यम् ॥

छकोण पणव एगो पुव्वं पिव मेरु तेरस य इत्थ ।
सव्वक्खरेहिं बारस सिलोगवन्ना य पन्नरसा ॥ ६१३
पृथिवीमण्डलमध्ये यन्त्रमिदं मायया त्रिरावेष्ट्यम् ।
पर्यन्ते क्रोंकारः पूज्यं स्थाने क्वचिद् दृष्टम् ॥ ६१४
समवसृतौ मुख्योऽक्षो वीरः शेषास्ततश्चतुर्वक्त्रः ।
अग्न्यादौ तु कपर्दीन्यासा द्वादशसभाश्च स्युः ॥ ६१५
तत्रैव गौतमोऽर्हं कर्पूराद्यैः समर्चयेद् भक्त्या ।
एवं च नाभिकमले ध्यायन् सूरिः स सर्वज्ञः ॥ ६१६
मुख्योऽर्हन् पूर्वस्यां सिद्धाः सौम्येऽथ गौतमस्वामी ।
याम्ये चोपाध्यायाः साधुरघः पूज्यपदाः ॥ ६१७
मध्ये कपर्दिकानां न्यासः स चतुर्गतिस्तु संसारः ।
तत्र ममैते शरणं तदर्चयेत् पञ्चपूज्यपदान् ॥ ६१८
अक्षाणां मुष्टित्रयमर्पयति गुरुस्तथैव मुष्टिगतः ।
त्रिजगद्व्यवहारोऽयं सङ्केतः स्याज्जनस्तमक्षम् ॥ ६१९
वासाहुतिनिक्षेपः शङ्खोऽग्रिमसुद्रयाऽक्षलाभाय ।
पल्लव-मुद्रादर्शनमिह शिष्याणां समृद्ध्यै स्यात् ॥ ६२०

सौभाग्यमुद्रयाऽऽत्मनि सौभाग्यं वज्रमुद्रया रक्षाः ।
अक्षाः प्रणवाकृतयः कला कपर्दीति पञ्चपूज्यपदी ॥ ६२१

॥ इति श्रीसिंहतिलकसूरिविरचिते
मन्त्रराजरहस्ये पूजादिरहस्यम् ॥

*

ग्रन्थकर्तुः प्रशस्तिः ।

इत्यवचिन्त्य बहुश्रुतमुखपद्मेभ्यो मयाऽऽत्मसंस्मृत्यै ।
गणभृन्मन्त्ररहस्यं गणितमिदं दिशतु गणलक्ष्मीम् ॥ ६२२

मतमिति गुरुमुखतो यन्मन्त्रोच्चारणे भवन्ति बहुभेदाः ।
तत्रास्मन्मतमेतत् सद्गुरुवचनं प्रमाणमिह ॥ ६२३

श्रीविबुधचन्द्रगणभृच्छिष्यः श्रीसिंहतिलकसूरिरिदम् ।
लीलावत्या वृत्त्या सहितं विदधे श्रियं दिशताम् ॥ ६२४

संयतगुण-त्रयोदशे (१३२७) वर्षे दीपालिकापर्वसद्दिवसे ।
साह्लाददेवतोज्ज्वलमनसा पूर्ति मयेदमानीतम् ॥ ६२५

॥ इति श्रीयशोदेवसूरिशिष्यश्रीविबुधचन्द्रसूरि-
शिष्यश्रीसिंहतिलकसूरिभि-
र्मन्त्रराजरहस्यं रचितम् ॥

॥ ग्रन्थाग्रम् ८०० ॥

॥ श्रीमन्त्राधिराजकल्पः संपूर्णः ॥

१. परिशिष्ट।

# मन्त्रराज-रहस्यगत मन्त्रोद्धार
अने
# सूरिमन्त्रना ११ आम्नाय।



अर्हँ।

[१] १. ॐ णमो जिणाणं।
२. ॐ णमो ओहिजिणाणं।
३. ॐ णमो परमोहिजिणाणं।
४. ॐ णमो अणंतोहिजिणाणं।
५. ॐ णमो अणंताणंतोहिजिणाणं।
६. ॐ णमो केवलीणं।
७. ॐ णमो भवत्थकेवलीणं।
८. ॐ णमो अभवत्थकेवलीणं।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा॥

— आ आठ पदोने कपूर अने चंदनथी पटमां आलेखवां अने तेनी नीचे साध्यनुं नाम लखीने श्वेत पुष्पो वडे पूजन करवुं, तेमज त्रण दिवस सुधी ए पदोनो १००८ वार जाप करवाथी बंधनमांथी मुक्ति मळे छे। (१३-१४)

[२] १. ॐ णमो उग्गतवस्सीणं।
२. ॐ णमो दित्ततवस्सीणं।
३. ॐ णमो तत्ततवस्सीणं।
४. ॐ णमो पडिमापडिवन्नाणं।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा॥

— आ चार लब्धिपदोनुं चार दिशाओमां वज्रपंजर करी, तेनी अंदर पोतानुं चिंतन करवाथी परवादीनी विद्यानुं खंडन करी शकाय छे। सात रात्रि सुधी जाप करवामां आवे तो ते अजेय–अजय्य बने छे। (१५-१६)

[३] १. ॐ णमो चउद्दसपुव्वधारीणं ।
२. ॐ णमो दसपुव्वधारीणं ।
३. ॐ णमो इकारसंगधारीणं ।
४. ॐ णमो पयाणुसारीणं ।
५. ॐ णमो उज्जुमईणं ।
६. ॐ णमो विउलमईणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— खारा, खाटा आहारनो त्याग करी एकासणुं करीने आ छ लब्धिपदोनो जूइनां १२००० पुष्पो वडे जाप करवामां आवे तो ते सारस्वत विद्याने आपे छे । (१८-१९)

[४] १. ॐ णमो खेल्लोसहिपत्ताणं ।
२. ॐ णमो विप्पोसहिपत्ताणं ।
३. ॐ णमो जल्लोसहिपत्ताणं ।
४. ॐ णमो आमोसहिपत्ताणं ।
५. ॐ णमो सव्वोसहिपत्ताणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ पांचे लब्धिपदोने सुगंधी द्रव्योथी पात्रमां लखवां । ते पदोनी नीचे रोगीनुं नाम लखवुं । ते पाचे लब्धिपदो—चंद्र जेवी कातिवाळा मंत्राक्षरोनो श्वेत पुष्पो वडे रोगीने ध्यानमां राखीने १००८ वार जाप करवामा आवे तो ते मंत्राक्षरो रोगीना शरीरमां अमृतने वरसावे छे एवुं ध्यान करे अने ते पात्रने गायना दूधथी धोई (रोगीने) पिवडावे अने उंजन करीने तेनुं पाणी देवामां—छांटवामा आवे तो ते कोढ रोगने दूर करे छे । (२०-२२)

वळी मनुष्योनु अल्पकाळमा थनारु मृत्यु, मारी, उन्माद तेमज ग्रहनी पीडा दूर थाय छे । एकेक पदथी क्रमश अथवा पांचे पदोथी बधा रोग शमी जाय छे । (२३)

[५] १. ॐ णमो विज्जासिद्धाणं ।
२. ॐ णमो खीरासवीणं ।
३. ॐ णमो महुआसवीणं ।
४. ॐ णमो अमियासवीणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ चारे लब्धिपदोनुं अगाउ जणाव्या मुजब ध्यान करवामां आवे तो ते स्थावर वगेरे जातनां विषोनो नाश करे छे । (२४)

[६] १. ॐ णमो खीरासवीणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ लब्धिपदना जापथी अढार जातना कोढ शमे छे। (२५)

[७] १. ॐ णमो महुआसवीणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ लब्धिपदना जापथी बधा प्रकारना ताव दूर थाय छे । (२६)

[८] १. ॐ णमो अमियासवीणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ लब्धिपदना जापथी समग्र उपसर्गोनुं निवारण थाय छे । (२६)

[९] १. ॐ णमो बीयबुद्धीणं ।
२. ॐ णमो कुट्ठबुद्धीणं ।
३. ॐ णमो संभिन्नसोयाणं ।
४. ॐ णमो अक्खीणमहाणसियाणं ।
५. ॐ णमो सव्वलद्धीणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ पांचे लब्धिपदोने अगाउनी जेम आलेखीने १००८ सारां पुष्पो वडे त्रण दिवस सुधी जाप करवामां आवे तो लाभ थाय अने अक्षीणकोशता प्राप्त थाय । (२७)

[१०] १. ॐ णमो विउव्वणइड्ढिपत्ताणं ।
२. ॐ णमो आगासगामीणं ।
३. ॐ णमो जंघाचारणाणं ।
४. ॐ णमो विज्जाचारणाणं ।
नत्वा प्रयुञ्जे यां विद्यां सा मे विद्या प्रसिद्ध्यतु स्वाहा ॥

— आ चारे लब्धिपदो बधी दिशाओने प्रकाशित करनारां छे अने त्रण लोकना समग्र दोषोने ते हरी ले छे । (२९)

[११] १. ॐ णमो तेउल्लेसाणं ।
२. ॐ णमो सीयल्लेसाणं ।
३. ॐ णमो तत्तलेसाणं ।
४. ॐ णमो दिट्ठिविसाणं ।

५. ॐ णमो आसीविसाणं ।
६. ॐ णमो वयविसाणं ।
७. ॐ णमो चारणाणं ।
८. ॐ णमो महासुमिणाणं ।
९. ॐ णमो तेजोग्गिनिसग्गाणं ।

— आ नवे लब्धिपदोने स्तुतिपदोनी साथे सोनाना पात्रमां कपूर अने चंदनथी लेप करीने समवसरण आलेखवुं ।

विनीतायां राज्यं करोति ।

राज्य ददाति पुत्रेभ्यः, दीक्षां गृह्णाति विभुः, श्रेयांसात् पारणं वर्षे ।

लब्धज्ञानः देवासुरमनुजसभावन्यपद धर्ममुपदिशति ।

मौनधरो विचरति ।

ॐ अर्हं युगादिनाथाय स्वाहा

देवदत्त

— आ प्रमाणे आलेखन करीने ध्यान करनारे समग्र मंत्रनो १०८ वार जाप करवो । मंत्रनी कमलपत्रथी पूजा करवी । 'भक्तामर' स्तव अने 'शांति' स्तवनो पाठ करवो ।

तीर्थोना पाणीथी भरेला एवा १०८ कळशोथी अभिषेक करता भगवंतना जन्म-कल्याणकनुं स्मरण करवुं अने मंतरेला पाणीथी स्नान करवुं, तेनाथी रोगीनुं सिंचन थतां ते स्वस्थ बने छे ।

खास करीने लांबा काळथी थयेला दावो, राज समक्ष—कोर्ट कचेरीना वादविवाद, अघटित कार्योमां अने सर्व प्रकारनी विपत्तिमां अगाउ कह्या मुजब करवाथी समग्र दुःखनी शांति थाय छे ।

## ६. परिशिष्टम् ।

### सिरिसूरिमंतथुई ॥

पढमपए सुनिविट्ठा विज्जाए सूरिणो गुणनिहिस्स ।
गोयमपयभत्तिजुया सरस्सई मह सुहं देउ ॥ १ ॥

दुइयंपीढे निविट्ठा ईमाए विज्जाए निरुवममहप्पा ।
तिहुयणसामिणिनामा सहस्ससुयसंजुया संती ॥ २ ॥

सिरिगोयमपयकमलं झायंती माणुसुत्तरनगस्स ।
सिहरम्मि ठिया णिच्चं संघस्स य मह सुहं देउ ॥ ३ ॥

*पउमदहपउमनिलया चउसट्ठिसुराहिवाण महमहणी ।
सव्वंगभूसणधरा पणमंती गोयमसुणिंदं ॥ ४ ॥*

विजया-जया-जयंती-नंदा-भद्दासमण्णिया तइए ।
विज्जपएसु निविट्ठा सिरिसिरिदेवी सुहं देउ ॥ ५ ॥

विज्जाचउत्थपीढे निवेसिओ गोयमस्स अभिरुइओ ।
गणिपिडगजक्खराओ अणपणपन्नीकयपइट्ठो ॥ ६ ॥

सोलससहस्सजक्खाण सामिओ अतुलियबलो उ वीसभुओ ।
जिणसासणस्स पडणीयं महरिउवग्गं निवारेओ ॥ ७ ॥

सोहम्मकप्पवासी एरावणवाहणो उ वज्जकरो ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥ ८ ॥

ईसाणकप्पवासी सूलकरो वसहसंठिओ निच्चं ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥ ९ ॥

सेंइयकप्पे निवासी सिरिसुंमणो नामओ य चक्ककरो ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥ १० ॥

सिरिबंभलोयवासी सोमणसो नामओ य बहुसत्थो ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥ ११ ॥

---

१ सुपइट्ठा म० । २ °यट्ठाणनि° म० । ३ इमाइ वि° म० । ४ °नाम स° म० । * * म० आदर्शे नास्तीय गाथा । ५ °त्यट्ठाणे नि° म० । ६ अभिसुहिओ म० । ७ गणिपिडज° म० । ८. °पराडिणीय म० । ९ °रेउ म० । १० °णा उ व° म० । ११ इयकप्पे म० । १२. सिरिसमणो म० ।

अट्ठकुलनागराया सहसफणो सिरिनिविट्ठकरमउलो ।
सेवइ धरणिंदो वि य सगोयमं मंतवररायं ॥ १२ ॥

रोहिणिपमुहा देवी चउसट्ठिसुराहिवा तहा अन्ने ।
सेवइ गोयमचलणे जक्खा-जक्खिणिचउव्वीसं ॥ १३ ॥

कणयमयसहसपत्ते कमलम्मि य संठिओ य लद्धिजुओ ।
बहुपाडिहेरकलिओ झायव्वो गोयममुणिंदो ॥ १४ ॥

'ऑ क्रों ह्रीं श्रीं'

एएणं मंतेणं झाणारम्भे ठविज्जए निच्चं ।
अञ्जलिमुद्दाकरणे संनिहियसुराण सुमवाओ ॥ १५ ॥

संनिहियसुरवराणं उस्सग्गो कीरए सपूया य ।
कप्पूर-धूव-वासेहिं संवहा विहियचंभवओ ॥ १६ ॥

थोवजलविहियन्हाणो वरवत्थविभूसिओ य तिकालं ।
कम्मक्खयहेउं जो संमरइ विज्जं इमं विज्जं ॥ १७ ॥

*ॐ किरिपिरिसिरिहिरिआयरिअ एयस्स मंतरायस्स ।
जावं तिलक्खमाणं करेइ जो सो गोयमो होइ ॥ १८ ॥*

सोहग्ग य परमिट्ठी सुरही पवयण-कंजली झाणे ।
मुद्दापंचगमेयं कायव्वं सव्वकालं पि ॥ १९ ॥

किं चिंतामणि-कामधेणु-कप्पद्दुमसुंदरं
नवनिहि-चउदसरयणपवर चक्कित्तणं मणहर ।
रज्जा सुवयणि सिरिवरिविज्ज गोयमसुपइट्ठिय
भुवणत्तय अक्खलियमहप्प निट्ठियकम्मट्ठ य ॥ २० ॥

*

१. °राओ स° म० । २ °फडो सि° अ० । ३ °चरणे म० । ४. जक्खाण चउवीसं म० । ५ °सहस्सपत्ते म० । ६ मतेग अ० । ७ अञ्जलिकरमुद्दाए अ० । ८ °सुरस्स स° म० । ९. संविहिय सु° अ० । १० सुव्वया म० । ११. सुमरइ म० । **नास्तीय गाथा अ० पुस्तके । १२ इम स्फार म० । १३ सोहणरय म० । १४. °ट्ठी पवयणसुरही कयअली चेव म० । १५ °काल्य म० । १६ °मुदह म० । १७. °सयु सहयह म० । १८ °राजा मुनिरइ मि° म० ।

म०-भैरवपद्मावतीकल्प- परिशिष्ट २९ । अ०-संपादकस्था प्रति ।

# ७. परिशिष्टम् ।

## सिरिउज्जोयणसूरिविरइयं

## पवयणमंगलसारथयं ॥

[ प्रवचनमङ्गलसारस्तवः । ]

*

नमः श्रीप्रवचनाय ॥

अरिहंते णमिऊणं सिद्धे आयरिय-सव्वसाहू अ ।
पवयणमंगलसारं वुच्छामि अहं समासेणं ॥ १ ॥

पढमं णमह जिणाणं ओहिजिणाणं च णमह सव्वेसिं ।
परमोहिजिणे पणमह अणंतओहीजिणे णमह ॥ २ ॥

सव्वोहिजिणे वंदे पणमह भावेण केवलिजिणे य ।
णमह य भवत्थकेवलिजिणणाहे तिविहजोएणं ॥ ३ ॥

पणमह उज्जुमईणं विउलमईणं च णमहं भत्तीए ।
पण्हासमणे पणमह णमह तहा वीयबुद्धीणं ॥ ४ ॥

पणमह कुट्ठबुद्धी पयाणुसारीण णमह सव्वेसिं ।
पणमामि सुयहराणं णमह य संभिन्नसोयाणं ॥ ५ ॥

पणमह चउदसपुव्वी तह दसपुव्वी अ वायगे वंदे ।
इक्कारसंगसुत्तत्थधारए णमह आयरिए ॥ ६ ॥

चारणसमणे पणमह तह जंघाचारणे अ पणमामि ।
वंदे विज्जासिद्धे आगासगमेए अ जिणकप्पे ॥ ७ ॥

---

१. सेण॰ कु० । २. सव्वाण कु० । ३ ॰णे नमह य अ॰ अ० । ४. वंदे सव्वा (व्वो) हिजिणे प॰ कु० । ५ ॰जोएण कु० । ६ णमह य उ॰ कु० । ७ ॰ह सव्वसि अ० । ८. पण्णास॰ कु० । ९. ॰ह य तह बी॰ कु० । १० पणमह कोट्ठ॰ कु० । ११ सव्वाण कु० । १२. पणमह सुयधराण कु० । १३. ॰ण पणमह स॰ अ० । १४ ॰सभिण्णसो॰ कु० । १५. वंदे चोद्दस॰ कु० । १६. वायए वंदे कु० । १७ एयारसंग कु० । १८. ॰गमे य जि॰ कु० ।

आमोसहिणो वंदे खेलोसहि-जल्लमोसहे णमह ।
सव्वोसहिणो वंदे पणमह आसीविसे[2] चेव ॥ ८ ॥

पणमह [3]दिट्ठीविसिणो वयणविसे णमहँ तचलेसिल्ले ।
वंदामि सीअलेसे विप्पोसहिणो अ वंदामि ॥ ९ ॥

खीरासवाण णमिमो महुआसवाण वंदिमो चलणे ।
अमयासवाण पणमह अक्खीणमहाणसे वंदे ॥ १० ॥

पणमामि विउव्वीणं जलहीगमणाण भूमिमज्जीणं ।
वंदामि अणुअरूवे महल्लरूवे पणिवयामि ॥ ११ ॥

मणवेगिणो अ पणमह गिरिरायअइच्छगे पणिवयामि ।
दिस्सादिस्से णमिमो णमह य संभिन्नइड्ढिसंपन्ने ॥ १२ ॥

पणमह पडिमावण्णे तवोविहाणेसु चेवँ सव्वेसु ।
पणमामि गणहराणं जिणजणणीणं च पणमामि ॥ १३ ॥

केवलनाणं पणमामि दंसणं तह य सव्वनाणाइं ।
चारित्तं पंचविहं तेसु अ जे साहुणो सव्वे ॥ १४ ॥

चक्कं छत्तं रयणं ज्झओ अ चमराइँ दुंदुहीओ य ।
सिंहासण-किंकिल्ली पणमह वाणी जिणिंदस्स ॥ १५ ॥

वंदामि सव्वसिद्धे पंचाणुत्तरनिवासिणो जे अ ।
लोगंतिएँ अ देवे वंदे सव्वे सुरिंदे अ ॥ १६ ॥

---

१. °जल्लमहिणो कु० । २. °से तह य कु० । ३ दिट्ठिवि° अ० । ४ °ह तेयले° कु० । ५ °सविणो ण° कु० । ६. महुस्सवाण च वं० कु० । ७ अमयस्सवाण कु० । ८. भूमिसज्जीण कु० । ९. पणमामि कु० । १०. अणुयरूए म° कु० । ११. १. °रूवे य पणमामि कु० । १२ °रायपडिच्छिरे य पणमामि कु० । १३. सव्वड्ढि° कु० । १४. चेय स° कु० । १५. °ही वनी अ० । १६. सीहासण° कु० । १७ किंकेली कु० । १८. लोयतिए य देवे वदह स° कु० ।

आहारगदेहधरे उवसामगसेढिसंठिए वंदे ।
सम्मद्दिट्ठिप्पभिई सव्वे गुणठाणगे वंदे ॥ १७ ॥

संती कुंथू अ अरो एआणं आसि नव महानिहिणो ।
चउदस रयणाणि पुढो छन्नउई गामकोडीओ ॥ १८ ॥

ता एयाणं पणमह पणमह अन्ने वि चक्किणो सव्वे ।
जे अरहंति पणामं भवम्मि धुवभाविमुक्खा य ॥ १९ ॥†

बल-केसवाण जुअले पणमह अन्ने वि भव्वठाणे अ ।
सव्वे वि वंदणिज्जे पवयणसारे पणिवयामि ॥ २० ॥

ॐ मे अ वग्गु वग्गु सोमे सोमणसे होइ महुमहुरे ।
किलि किलि अप्पडिचक्का हिलि हिलि देवीओ सव्वाओ ॥ २१ ॥

इय पवयणस्स सारं मंगलमेअं तु पूईअं इत्थ ।
एयं जो पढइ णरो सम्मद्दिट्ठी वि गोसग्गे ॥ २२ ॥

तद्दिवसं तस्स भवे कल्लाणपरंपरा सुविहिअस्स ।
जं जं सुहं पसत्थं मंगल्लं होइ [12]तं तस्स ॥ २३ ॥

इति प्रवचनमङ्गलसारस्तवः ।

श्रीसूरिणा सूरिमन्त्रध्यानावसरे उभयसन्ध्यं च सम्यग् ध्येयः स्व-परहितार्थे ॥

*

---

१ °रयदे° कु० । २. °संठिए अ० । ३. °प्पभुई कु० । ४ °ठाणए वंदे कु० । ५ °महाणिहिओ कु० । ६ चोद्दसरयणाइँ पुणो छ° कु० । † कु° पुस्तके नास्तीयं गाथा । ७ अण्णे य भव्वठाणेसु कु० । ८. ओ मे भगवा वग्गू सुमणे ॥ होंतु महुमहुरा कु० । ९. किलियप्पडीचक्का कु० । १०. °अं एत्थ कु० । ११. तद्दियसं कु० । १२ त तं च कु० ॥

कु० कुवलयमाला । अ० संपादकसत्का प्रतिः ।

# ८. परिशिष्टम् ।

## सिरिमाणदेवसूरिविरइया

## सिरिसूरिमंतथुई ॥

— ⁂ —

### [ पढमा वायणा ]

सिरिसूरिमंतपवरे जे सिद्धा सुयपवुड्ढिसंजणगा ।
तव्वयणसंगहो मे वण्णिज्जइ तप्पए नमिउं ॥ १ ॥

जिण-ओहिअ-परमोहिअ-णंतोहिअ-णंतणंतओहिजिणा ।
केवलि-भवत्थकेवलि-अभवत्थियकेवलीणं च ॥ २ ॥

उज्जुमई-विउलमई-वेउव्वियलद्धि-सव्वलद्धीणं ।
पण्हासमणाण तहा जंघाचारणमुणीणं च ॥ ३ ॥

विज्जासिद्धाण तहा आगासगामीण तह य निचं पि ।
आमोसहि-विप्पोसहि-खेलोसहि-जल्लओसहीणं च ॥ ४ ॥

सव्वोसहि-आसीविस-अट्ठंगनिमित्तधारयाणं च ।
वयणविस-तेउलेसाण पणमिमो सीयलेसाणं ॥ ५ ॥

चउदस-दसपुव्वीणं एगारसअंगसुत्तधारीणं ।
संभिन्नसोयाण तहा दुबोलसंगीण सव्वसिद्धाणं ॥ ६ ॥

उग्गतवचरणचारीणमेव बत्तीसथुइपयाणं च ।
आइम्मि 'नमो ॐ ह्रीं' पढमपयाओ छट्ठिबहुवयणं ॥७॥

*

### [ बीया वायणा ]

खीरासव-महुआसव-अमियासवलद्धियाण पत्तेयं ।
अक्खीणमहाणससंठियाण संभिन्नसोयाणं ॥ १ ॥

तत्तो पयाणुसारीलद्धीणं तह य बीयबुद्धीणं ।
तत्तो य कुट्ठबुद्धीणं सव्वपया 'ॐ नमो' पुव्वं ॥ २ ॥

जिण-ओहिं आरब्भा जाव य वेउव्विलद्धिपयं च ।
चउदस-दसपुव्वीणं तह उण एगारसंगीणं ॥ ३ ॥
एए चउवीसपए नायव्वे सूरिणो पवरमंते ।
मायावण्णविरहिए नूणमुवरिज्जए निच्चं ॥ ४ ॥

*

[ तइया वायणा ]

रागाइरिउजईणं नमो जिणाणं नमो महं होउ ।
एवं ओहिजिणाणं परमोहीणं तहा तेसिं ॥ १ ॥
एवमणंतोहीणं णंताणंतोहिजुयजिणाण नमो ।
सामन्नकेवलीणं भवाभवत्थाण तेसिं तहा ॥ २ ॥
उग्गतवचरणचारीणमेवमित्तो नमो होइ ।
चउदस-दसपुव्वीणं नमो तहेगारसंगीणं ॥ ३ ॥
एएसिं सव्वेसिं एवं काउं अहं नमोकारं ।
जमियं विज्जं पउंजे सा मे विज्जा पसिज्झिज्जा ॥ ४ ॥
निच्चं नमो भगवओ बाहुबलिस्सेह पण्हसमणस्स ।
ॐ वग्गुं वग्गु निवग्गुं निवग्गुमग्गंगयस्स तहा ॥ ५ ॥
समणे वि य सोमणसे महुमहुरे जिणवरे नमंसामि ।
इरिकाली पिरिकाली सिरिकाली तह य महकाली ॥ ६ ॥
किरियाए हिरियाए अ संगए तिविहकालयं विरए ।
सुहसाहए य तह सुनिसाहए साहुणो वंदे ॥ ७ ॥
*ॐ किरिकिरिकालि पिरिपिरिकालिं च [ ? तहा ] सिरिसिरिकालिं ।*
हिरिहिरिकालिपयं पि य सिरि य सिरि य आयरियकालिं ॥ ८ ॥
किरिमेरुं पिरिमेरुं सिरिमेरुं तह य होइ हिरिमेरुं ।
आयरिमेरुं पयमवि साहंते सूरिणो वंदे ॥ ९ ॥
इयमंतपयसमेया थुणिया सिरिमाणदेवसूरिहिं ।
जिण-सूरि-साहुणो सइ दिंतु थुणंताण सिद्धिसुहं ॥ १० ॥

---

# ९. परिशिष्टम् ।

श्रीपूर्णचन्द्रसूरिविरचितं

## श्रीसूरिविद्यागर्भितं लब्धिस्तोत्रम् ।

—•—

उत्तत्तरुणयत्थं झाणं धरिऊण मुहगमुद्दाए ।
जो झाइ सूरिविज्जं तस्स वसे तिहुअणं सयलं ॥ १ ॥
सजलजलवाहकालं झाणं धरिऊण चक्कमुद्दाए ।
जो झाइ सूरिविज्जं तस्स खयं जाइ रिउवग्गो ॥ २ ॥
जिणे-ओहिअ-परमोहिअं-णंतोहिअं-णंतणंतओहिजिणा ।
केवलि-भवत्थकेवलि-अभवत्थिअकेवलीणं च ॥ ३ ॥
उज्जुमई विउलमई चउदसपुव्विलद्धि-संभिन्नलद्धीणं ।
पण्हासमणा य तहा जंघाचारणमुणीणं च ॥ ४ ॥
विज्जासिद्धाणं तह आगासगामीण तह य निच्चं पि ।
वेयणविस-तत्तलेसाण पणमिमो सीअलेसाणं ॥ ५ ॥
चउदस-दसपुव्वीणं इक्कारसअंग[सुत्त?]धारीणं ।
तह य दुवालसअंगीण उग्गतवचरणचारीणं ॥ ६ ॥
सव्वेसि पि जिणाणं एएसि पयाण छट्टिबहुवयणं ।
आइम्मि 'नमो' सद्दो 'ॐ ह्रीं' सहि( हि )ओ अ पढमपए ॥ ७ ॥
सुक्कज्झाणेणेसो कम्मक्खयकारणो परममंतो ।
झायव्वो अ तिकालं निच्चं परमिट्ठिमुद्दाए ॥ ८ ॥
खीरासव-महुआसव-अमियासवलद्धिआन पत्तेयं ।
अक्खीणमहाणसलद्धियाण संभिन्नसोयाणं ॥ ९ ॥
नमो पयाणुसारिअलद्धीणं तह य बीयबुद्धीणं ।
नमो अ कुट्ठबुद्धीण सव्वपया 'ॐ नमो' आसी ॥ १० ॥
एएसि नमोक्कारं किच्चा इमाइ नाणभो स्सारा ।
मोक्खगई निच्चं नायव्वा गुरुसगासम्मि ॥ ११ ॥

फिसुअसुअसुहवणं झाणं धरिऊण जोणिमुद्दाए ।
विज्जं सो सोहग्गं पावइ जवईण जोगं च ॥ १२ ॥
उत्ततकणयवन्नं ०॥ १३ ॥ ( १ )
सजलजलवाहवन्नं ०॥ १४ ॥ ( २ )
इअ एए उवएसा सव्वे नाऊण झाइ जो सूरी ।
सो पुन्नचंदसूरीण संमयं लहइ सिवसुक्खं ॥ १५ ॥

इति विचारगर्भितं लब्धिस्तोत्रं समाप्तम् ॥

## १०. परिशिष्टम् ।

सिरिमुणिसुन्दरसूरिविरइयं

### संतिकरथवणं ।

संतिकरं संतिजिणं जगसरणं जयसिरीई दायारं ।
समरामि भत्त-पालग-निव्वाणी-गरुडकयसेवं ॥ १ ॥
'ॐ सनमो विप्पोसहिपत्ताणं संतिसामिपायाणं ।
झ्रौं स्वाहा'मंतेणं सव्वासिवदुरिअहरणाणं ॥ २ ॥
'ॐ संति-नमुक्कारो खेलोसहिमाइलद्धिपत्ताणं ।
सौं ह्रीं' नमो सव्वोसहिपत्ताणं च देइ सिरिं' ॥ ३ ॥
वाणी-तिहुअणसामिणि सिरिदेवी-जक्खराय-गणिपिडगा ।
गह-दिसिपाल-सुरिंदा सया वि रक्खंतु जिणभत्ते ॥ ४ ॥
रक्खंतु मम रोहिणी-पन्नत्ती वज्जसिंखला य सया ।
वज्जंकुसि-चक्केसरि-नरदत्ता-कालि-महकाली ॥ ५ ॥
गोरी तह गंधारी महजाला माणवी अ वइरुट्टा ।
अच्छुत्ता माणसिआ महमाणसिया उ देवीओ ॥ ६ ॥
जक्खा गोमुह-महजक्ख-तिमुह-जक्खेस-तुंबरू कुसुमो ।
मायंग-विजय-अजिआ बंभो मणुओ सुरकुमारो ॥ ७ ॥

छम्मुह पयाल किन्नर गरुडो गंधव्व तह य जक्खिंदो ।
कुवर वरुणो भिउडी गोमेहो पास-मायंगा ॥ ८ ॥
देवीओ चक्केसरि-अजिआ-दुरिआरि-कालि-महकाली ।
अच्चुय-संता-जाला सुतारया सोय-सिरिवच्छा ॥ ९ ॥
चंडा विजयंकुसि-पन्नइत्ति-निव्वाणि-अच्चुआ-धरणी ।
वइरुट्ट-छुत्त-गंधारि-अंब-पउमावई सिद्धा ॥ १० ॥
इय तित्थरक्खणरया अन्ने वि सुरा सुरीउ चउहा वि ।
वंतर-जोइणिपमुहा कुणंतु रक्खं सया अम्हं ॥ ११ ॥
एवं सुदिट्ठिसुरगणसहिओ संघस्स संतिजिणचंदो ।
मज्झ वि करेउ रक्खं मुणिसुंदरसूरि थुअ-महिमा ॥ १२ ॥
इअ संतिनाहसम्मदिट्ठियरक्खं सरइ तिकालं जो ।
सव्वोवद्दवरहिओ स लहइ सुहसंपयं परमं ॥ १३ ॥
[ तवगच्छगयणदिणयरजुगवरसिरिसोमसुंदरगुरूणं ।
सुपसायलद्धगणहरविज्जासिद्धी भणइ सीसो ॥ १४ ॥ ]

## ११. परिशिष्टम् ।

श्रीमुनिसुन्दरसूरिरचितं

### श्रीगौतमगणधरस्तोत्रम् ।

सूरिमन्त्राधिष्ठायकस्तवत्रयी ।

[ १ अ ]

जयसिरिविलासभवणं वीरजिणंदस्स पढमसीसवरं ।
सयलगुणलद्धिजलहिंसिरिगोयमगणहरं वंदे ॥ १ ॥
'ॐ' सह 'नमो भगवओ' जगगुरुणो 'गोयमस्स सिद्धस्स' ।
बुद्धस्स पारगस्स अक्खीणमहाणसस्स' सया ॥ २ ॥
'अवतर अवतर भगवन् ! मम हृदये भास्करीश्रियम् ।
बिभ्रहि ह्रीँ श्रीँ ज्ञानादि वितरतु तुभ्यं नमः स्वाहा' ॥ ३ ॥

जस्स तुह नाममंतो जम्म मणे सयलवंछियं दितो ।
चिंतामणि-सुरपायव-कामघडाइ किं तस्स ॥ ४ ॥

सिरिगोयमगणनायग ! तिहुयणजणसरणदुरियदुहहरण ! ।
भवतारण ! रिउवारण ! होसु अणाहस्स मह नाहो ॥ ५ ॥

मेरुसिरे सिंहासण कणयमहासहसपत्तकमलट्ठिअं ।
सुरिगणकयाणं निमयमसिप्पहगोयमं वंदे( ? )॥ ६ ॥

सव्वसुहलद्धिदाया सुमरियमित्तो वि गोयमो भयवं ।
पइट्ठिभगणहरमंतो दिज्जा मम मणवंछियं सयलं ॥ ७ ॥

इय सिरीगोयमसंथुअं मुणिसुंदरथुइपयं मए पि तुमं ।
देहि महासिद्धिमिरफलयं भुवणकप्पतरुवरस्स ॥ ८ ॥

इति श्रीगौतमगणधरस्तोत्रम् ॥

---

## श्रीसूरिमन्त्रस्तुतिः ।

[ २ आ ]

जयश्रियं श्रीजिनशासनस्य कलिद्विपोत्थोत्तिकुविघ्नहर्ता ।
परे य एते सुत्रतेऽधुनाऽपि श्रीसूरिमन्त्रं प्रयतः स्तवीमि ॥ १ ॥
त्वं तीर्थकृत् त्वं परमं च तीर्थं त्वं गौतमस्त्वं गणभृत् सुधर्मा ।
त्वं विश्वनेता त्वमसीहितानां निधिः सुखानामिह मन्त्रराज ! ॥ २ ॥
किं कामधेनुः सुरपादपो वा किं कामकुम्भः सुमनो मणिर्वा ।
यदि प्रसन्नः सकलेष्टदायी श्रीसूरिमन्त्रोऽसि जगत्पतिस्त्वम् ॥ ३ ॥
त्वयि स्थिते किं ननु विघ्नवर्गाः के दुर्जनाः के प्रतिपक्षभूपाः ।
के वैरिणस्ते किमुपद्रवाश्च स्वामिन् ! समग्रं हि सुखाकृदेव ॥ ४ ॥
न लब्धयः काश्चन ते प्रभावात् त्वयि प्रभो ! भक्तिभृतां दुरापाः ।
सदा सुखानन्दितचेतसो यत् खेलन्ति ते श्रीमहिमप्रभाभिः ॥ ५ ॥
प्रवर्तितं तीर्थमिदं जनस्य जयाद्यदाहुः प्रसहेत कुधी ।
यदागमो यद्विजयी च धर्मस्त्वदत्र हेतुर्भगवांस्त्वमेव ॥ ६ ॥

श्रीवर्धमानस्य निदेशतस्त्वं प्रतिष्ठितो गौतमगच्छनेत्रा ।
सिद्धिः समग्रा शिवसंपदश्च सर्वोग्रपुण्यानि फलानि दत्से ॥ ७ ॥
इति महामुनिवृन्दसंस्तवोऽकृत गणेधरमन्त्रपतेर्मया ।
महिमवारिनिधेः स्तुतभक्तितो वितर मेऽर्पितसर्वसुखश्रियम् ॥ ८ ॥

इति श्रीसूरिमन्त्रस्तुतिः ॥

---

## श्रीसूरिमन्त्रस्तोत्रम् ।

[ ३५ ]

## १२. परिशिष्टम् ।

### श्रीमुनिसुन्दरसूरिविरचितं

### श्रीगौतमस्तोत्रम् ॥

---

जयश्रियं सेवधिमेधमानसमग्रलब्धिह्रदिनीनदीशम् ।
सुरासुरेन्द्रालिविधीयमानक्रमाम्बुजोपासनभासमानम् ॥ १ ॥

सहस्रपत्राद्भुतहेमपद्मे पद्मासनासीनमदीनमेधम् ।
जगत्त्रयैकप्रभुताप्रभावप्रभाभिरामं मुनिराजिराजम् ॥ २ ॥

अनुत्तरब्रह्ममयं निरङ्कमृगाङ्कबिम्बोज्ज्वलकायकान्तिम् ।
श्रीवर्धमानादिमशिष्यनाथं श्रीगौतमस्वामिनमानुवामि ॥ ३ ॥

—विशेषकम् ।

निदेशतो वीरजिनेश्वरस्य दशमश्लोकमितं व्यधाद् यः ।
श्रीसूरिमन्त्रं त्रिजगद्धितैषी स गौतमो रातु ममेष्टसिद्धिम् ॥ ४ ॥

सरस्वती विश्वहितावधाना सूरीश्वरध्यानपदप्रभावा ।
सहस्रहस्तप्रथिता त्रिलोकस्वामिन्यपि प्रार्थितशस्तदात्री ॥ ५ ॥

श्रीदेवता विश्वविमोहनी चासुरेन्द्रवर्गैस्तवनीयरूपा ।
यक्षाधिपो विंशतिशस्त्रहस्तस्फुरज्जगज्जैत्रपराक्रमश्च ॥ ६ ॥

इन्द्राश्चतुःषष्टिरभीष्टदाश्च त्रिलोकरक्षाप्रभवत्प्रभावाः ।
यक्षाश्चतुर्विंशतिरार्हताङ्घ्रिसेवापवित्रीक्रियमाणगात्राः ॥ ७ ॥

देव्योऽपि दिव्याव्ययशक्तियुक्ता भक्ता जिनेष्वार्हतभद्रसक्ताः ।
उपासते यं गणधारिमन्त्राधिष्ठायिका नित्यमचिन्त्यभक्त्या ॥८॥

यन्नाममन्त्रोऽपि जयत्यचिन्त्यशक्तिर्मरुत्कुम्भ-मणि-द्रुमादीन् ।
तं सर्वचिन्तातिगशर्महेतुं श्रीगौतमं नौमि भवाब्धिसेतुम् ॥ ९ ॥

पदं यथाब्धिस्तटिनीतटीनां खं तारकाणां विटपील्लतानाम् ।
तथा विभो ! गौतम ! सर्वलब्धिप्रभामहिम्नां भगवँस्त्वमेव ॥ १० ॥

मुक्तिं व्रजँस्त्वं न्यदधाः स्वनाम्नि सश्रीसखीनाथ ! निजानुलब्धीः ।
वसत्यदो यत्र नरे गणेन्द्र ! वसन्ति यत्ता अपि तत्र सर्वाः ॥ ११ ॥

कान्ताः शिवाप्तौ तव लब्धयस्त्वां दुःखाद् भ्रमन्त्यः किल वीक्ष्यमाणाः ।
नामापि शृण्वन्ति तवेश ! यत्र सुत्कण्ठयेवानुसरन्ति तं द्राक् ॥ १२ ॥

तवाऽऽतपस्यासमयात् कराब्जे जज्ञे निलीना खलु केवलश्रीः ।
दीक्षामिषाद् यन्न्यदधा यदीयशिरस्सु तं ते द्रुतमापुरेताम् ॥ १३ ॥

त्वयाऽऽत्मनो वीरजिनाधिपेनाऽभेदस्तथाऽध्यायि वशेन भक्तेः ।
अनन्तचिद्-दर्शन-वीर्य-सौख्यलाभात् तदात्मैव विभो ! यथाऽभूः ॥ १४ ॥

शिवश्रियः कोऽपि दृढोऽनुरागस्त्वयीश ! सौभाग्यरमात्मकेऽहो ! ।
नामाऽपि यत् ते जपतः प्रबुद्धानेषाऽखिलान् प्रापयतेश ! शर्म ॥ १५ ॥

त्वदीयभक्तेः शिवशर्मलक्ष्म्या मैत्री प्रभो ! काऽपि परा नवीना ।
स्वाधारकान् भव्यजनान् गुणाढ्यांस्तस्यै पतीन् सा हि ददात्यशेषान् ॥१६॥

न के पदार्था बहवो महान्तस्तत्र प्रभावे तु विचिन्त्यमाने ।
पृथ्वी न पृथ्वी न गिरिर्गरीयान् नाब्धिर्महीयाश्च नभोऽप्यदभ्रम् ॥ १७ ॥

विदन्ति मानं जलधेर्भुवो वा केचित् कथञ्चिन्नभसोऽपि विज्ञाः ।
न ते प्रभावे पुनरस्ति मानं अनन्त्यमाना अपि किं तदार्थाः ! ॥ १८ ॥

ब्रह्मास्पदं वा कमलापदं वा वदन्तु पद्मं तव पादयोऽस्तु ।
अनाप्य माहात्म्यरमा नु तस्यै निषेवतेऽम्बूनि सदा तपस्वी ॥ १९ ॥

भोः ! भोः ! श्रिये किं व्यवहारखेदैराराधितैः किं बहुमन्त्र-तन्त्रैः ।
किं दैवतोपासनकर्मभिश्च श्रीगौतमं ध्यायत नाथमेकम् ॥ २० ॥

पुरा यथा गौतम ! तापसादिकान् मिथ्यामतादुद्धरसि स्फुरत्कृपः ।
तपस्क्रिया-संयम-योगदुर्बलं भवावटान्मामपि तद्वदुद्धर ॥ २१ ॥

भवाद् बिभेम्युत्कटदुःखराशेर्धर्तुं द्विषेशो न च योगशुद्धिम् ।
गतिर्न मेऽन्याऽस्ति ततः शिवेच्छोस्त्वमेव तद्देहि कृपा मयीश ! ॥ २२ ॥

भावद्विषो ये निहतास्त्वयेश ! ते व्यन्तरीभूय भवद्रुपेव ।
निरौजसं त्वत्कुलजं समीक्ष्य मां पीडयन्तीति मुनीन्द्र ! रक्ष ॥ २३ ॥

गणिवर ! तव सद्गुणैकलीनं भवतु मनो मम गौतमाविरामम् ।
विजहतु तदिमे कषायमुख्या रिपुनिकराश्च मयीति सुप्रसीद ॥ २४ ॥

एवं श्रीगणनाथ ! गौतमगुरो ! स्तुत्वा मयाऽभ्यर्थ्यसे
नाम्नाऽहं मुनिसुन्दरोऽभवमथो कुर्याः प्रसादं तथा ।
स्यां सर्वज्ञ ! यथार्थतोऽपि विशदज्ञानादिरत्नत्रया-
ल्लब्ध्वा कर्मजयश्रियं शिवपुरे राज्यं लभे चाचिरात् ॥ २५ ॥

इति श्रीयुगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-श्रीज्ञानसागरसूरि-श्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनिसुन्दरसूरिभिर्विरचिते जयश्रीके श्रीजिनरत्नकोशे प्रथमप्रस्तावे श्रीगौतमस्तोत्रमेकविंशम् ॥

---

## १३. परिशिष्टम् ।

### श्रीसूरिमन्त्रस्तोत्रम् ।

लक्षैर्यो जपेदेनमेक-त्रि-पञ्च-सप्तभिः ।
सकलं गौतमं मन्त्रं महासिद्धिकरं भवेत् ॥ ९ ॥
षट्कर्मकृज्जयश्रीद आकृष्टि-सुखकृत् सदा ।
ऐहिकार्थप्रदः स्वर्ग-मोक्षसौख्यकरस्त्वयम् ॥ १० ॥
आदेशं सूरये दत्ते शुभो वाऽप्यशुभः पुनः ।
चिन्तारत्नप्रभः सप्तमेरुमन्त्रो जिनैः स्मृतः ॥ ११ ॥
प्रणवं मायाबीजं [ च ] श्रीपदं मेरुसंज्ञकम् ।
इरि किरि गिरि पिरि सिरि हिरि आयरियं ॥ १२ ॥
वर्णत्रयादत ऊर्ध्वं गिरिमेरु नमस्ततः ।
'स्वाहा'शब्दं प्रयुञ्जीत सप्तमेरुप्रभावजुट्(गुरु) ॥ १३ ॥
अष्टम्यां च चतुर्दश्यां कृतोपवासः स्मरेद् यतिः ।
आदेशाय महाविद्या महिम्ने वाञ्छिताय च ॥ १४ ॥
ॐ इरिइरिकालीति सचक्रमुद्रया तथा ।
क्षयाय कृष्णध्यानेन मासं यावत् प्रयुज्यते ॥ १५ ॥
ॐ इरि किरि गिरि पिरि मिरि हिरि आचार्यपदमन्त्रराजस्य ।
कुर्याज्जापं त्रिलक्षं च गौतमः स भवेद् गुरुः ॥ १६ ॥
अष्टोत्तरसहस्रं तु दीपोत्सवे जपः कृतः ।
तैः पुष्पैरक्षतैस्तैश्च चूर्णं वश्याय जायते ॥ १७ ॥
अष्टम्यां चतुर्दश्यां मेरुमन्त्रं जपेद् गुरुः ।
अष्टोत्तरसहस्रं यो लभते स समीहितम् ॥ १८ ॥
अलोभो जितपञ्चाक्षः सच्छीलो नय-सत्यगारू ।
शुचिश्च विहितस्नानो मन्त्रराजं स्मरेत् कृती ॥ १९ ॥
मौनेन सततं भुङ्क्ते कायोत्सर्गेण यः स्मरेत् ।
तं स्तुवन्ति सुराः सर्वे वक्तुमेतस्य कः क्षमः ॥ २० ॥

इति श्रीसूरिमन्त्रस्तोत्रं समाप्तम् ॥

---

## १४. परिशिष्टम् ।

### श्रीमन्त्राधिराजगर्भितश्रीगौतमस्वामिस्तवनम् ।

नमोऽस्तु श्री-ह्री-धृति-कीर्ति-बुद्धि-लक्ष्मीविलासैकनिकेतनाय ।
श्रीवीरपट्टाम्बरभास्कराय लोकोत्तमाय प्रभुगौतमाय ॥ १ ॥

ॐकारमक्षीणमहानसानां श्रीमन्त्रमप्युज्जृम्भतपःप्रभावैः ।
ह्रींमन्त्रमात्मानुगवन्दनेनार्हन्तं नमस्यामि तमिन्द्रभूतिम् ॥ २ ॥

उन्निद्रसौवर्णसहस्रपत्रगर्भस्थसिंहासनसंनिषण्णम् ।
दिव्यातपत्रं परिवीज्यमानं सचामरैश्चामरराजसेव्यम् ॥ ३ ॥

कल्पद्रु-चिन्तामणि-कामधेनुसमाननामानमनानशक्तिम् ।
अनेकलोकोत्तरलब्धिसिद्धं श्रीगौतमं धन्यतमाः स्मरन्ति ॥ ४ ॥

एकैव षड्दर्शनदक्षिणीनिका पुराण-वेदागमजन्मभूमिका ।
आनन्दचिद्ब्रह्ममयी सरस्वती सदेन्द्रभूतेश्चरणोपसेविनी ॥ ५ ॥

सदा चतुष्षष्टिसुरेन्द्रमानसव्यामोहिनी पद्मह्रदाधिवासिनी ।
सर्वाङ्गशृङ्गारतरङ्गितद्युतिः श्रीगौतमं श्रीरपि वन्दते त्रिधा ॥ ६ ॥

जया-जयन्ती-विजया-ऽपराजिता-नन्दा-सुभद्राप्रमुखः सुरीजनः ।
प्रतिक्षणोज्जागरभूरिविभ्रमः श्रीगौतमं गायति गाढगौरवः ॥ ७ ॥

मानुषोत्तरगिरेः शिरःस्थिता दोःसहस्रसुभगा महाप्रभा ।
गीतगौतमगुणा त्रिविष्टपस्वामिनी शिवशतं ददातु मे ॥ ८ ॥

यक्षषोडशसहस्रनायको दिव्यविंशतिभुजो महाबलः ।
द्वादशाङ्गसमयाधिदेवता गौतमस्तुतिजुषां शिवङ्करः ॥ ९ ॥

ईशाननाथेन समं शतक्रतुः सनत्कुमाराधिपतिः सुरान्वितः ।
श्रीब्रह्मलोकाधिपतिश्च सेवते सगौतमं मन्त्रवरं पदे पदे ॥ १० ॥

अष्टनागकुलनायको मणिप्रोल्लसत्फणसहस्रभासुरः ।
गौतमाय धरणः कृताञ्जलिर्मन्त्रराजसहिताय वन्दते ॥ ११ ॥

रोहिणीप्रभृतयः सुराङ्गना वासवा अपि परे सदाश्रवाः ।
गौतमं मनसि यक्ष-यक्षिणीश्रेणयोऽपि दधती सुनीश्वरम् ॥ १२ ॥

सज्जलाभधनभोगधृतीनां लब्धिरद्भुततमेह भवे स्यात् ।
गौतमस्मरणतः परलोके भूर्भुवःस्वरपवर्गसुखानि ॥ १३ ॥

'ॐ क्रौं श्रीँ ह्रीँ'मन्त्रतो ध्यानकाले पार्श्वे कृत्वा प्राञ्जलिः सर्वदेवान् ।
कायोत्सर्गैर्धूप-कर्पूरवासैः पूजां कुर्यात् सर्वदा ब्रह्मचारी ॥ १४ ॥

जितेन्द्रियः स्वल्पजलाभिषेकवान् शुद्धाम्बरो गुप्ति-समित्यलङ्कृतः ।
श्रीइन्द्रभूतेरुपवैणवं गुणान् स्मरन् नरः स्याच्छ्रुतसिन्धुपारगः ॥ १५ ॥

तं श्रयन्ति पुरुषार्थसिद्धयो भूष्यते विशदसाहसेन सः ।
गौतमः प्रणयिभुक्तिमुक्तिदो यस्य भाविविभवस्य नाथते ॥ १६ ॥

इति श्रीमन्त्राधिराजगर्भितश्रीगौतमस्वामिस्तवनं समाप्तम् ॥

---

# १५. परिशिष्टम् ।

## श्रीसिंहतिलकसूरिविरचितं
## परमेष्ठिविद्यायन्त्रम् ।

---

श्रीवीरजिनं नत्वा वक्ष्ये श्रीविबुधचन्द्रपूज्यपदम् ।
गणिविद्यायुगपदतो यन्त्रं परमेष्ठिविद्यायाः ॥ १ ॥

त्रिभाकारं क्रमशश्चतुरष्ट-द्व्यष्टपत्रपद्मान्तः ।
किञ्जल्कपूज्यबीजं यन्त्रं लेख्यं सुरभिदलैः ॥ २ ॥

मध्ये 'ऽर्हं' ऊर्ध्वादिषु 'सि आ उ सा' रेखिकादलचतुष्के ।
ऋषभोऽथ वर्धमानश्चन्द्रानन-वारिषेणको दिक्षु ॥ ३ ॥

अष्टदलेषु क्रमशो 'युगादिनाथाय' तद् 'नमो'ऽत्रैव ।
गोमुख-चक्रेश्वर्यौ शस्यं कान्तं जिनः सुरश्च सुरी ॥ ४ ॥

द्व्यष्टदलेषु क्रमशः 'सुविधिजिनाय नमः' इत्यथ त्रिदशः ।
देवी श्रीवीरान्तं एवं तद् वच्मि नामानि ॥ ५ ॥

युगादीशोऽजितः स्वामी शम्भवोऽप्यभिनन्दनः ।
सुमतिः पद्मलक्ष्मा श्रीसुपार्श्वश्चन्द्रलाञ्छनम् ॥ ६ ॥

सुविधिः शीतलः श्रेयान् वासुपूज्यप्रभस्ततः ।
विमलानन्त-धर्मः श्रीशान्ति-कुन्थुररो जिनः ॥ ७ ॥

मल्लिः [च] सुव्रत-नमी नेमी श्रीपार्श्वतीर्थकृत् ।
'वीर'श्च जिननामान्ते 'नाथाय नमः' इत्यदः ॥ ८ ॥

श्रीगोमुखो महायक्षस्त्रिमुखो यक्षनायकः ।
तुम्बरुः कुसुमस्तस्मान्मातङ्गो विजयोऽजितः ॥ ९ ॥

ब्रह्मा यक्षेट् कुमारः षण्मुखः पाताल-किन्नराः ।
गरुडो गन्धर्वो यक्षेन्द्रः कुबेरो वरुणस्तथा ॥ १० ॥

भृकुटिर्गोमेधः पार्श्वो मातङ्गोऽमी जिनाश्रिताः ।
चक्रेश्वरी अजितबला दुरितारिश्च कालिका ॥ ११ ॥

महाकाल्यच्युता श्यामा भृकुटिश्च सुतारिका ।
अशोका मानवी चण्डा विदिताऽथ मियाङ्कुशा ॥ १२ ॥
कन्दर्पा निर्वाणी बला धारिणी धरणप्रिया ।
नरदत्ताऽथ गान्धारी अम्बिका पद्मावती तथा ॥ १३ ॥
सिद्धायिका इमा जैन्यः क्रमात् शासनदेवताः ।
जिन-देव-सुरीनामत्रयं प्रति दलं दलम् ॥ १४ ॥
एकोऽर्हन् सिद्धाद्याः पट् तीर्थेश्वराः क्रमादथ ।
चन्द्राभ-सुविध्याद्या अर्हत्-सिद्धादयः मान्वत् ॥ १५ ॥

"ॐ नमो अरिहो भगवओ अरिहंत-सिद्ध-आयरिय-उवज्झाय-सव्वसंघ-धम्म-तित्थपवयणस्स ।

ॐ नमो भगवईए सुयदेवयाए संतिदेवयाए सव्वदेव-पवयणदेवयाणं दसण्हं दिसापालाणं पंचण्हं लोगपालाणं ठः ठः स्वाहा ॥ "

विधेयं वलयाकृत्या लेख्या नवे-गज(८९)प्रमा ।
अस्यां वर्णाः श्लोकयुग्मं पञ्चविंशतिरक्षराः ॥ १६ ॥
मघवाऽग्निर्यमो रक्षो वरुणो वायुदिक्पतिः ।
पूर्वादौ धनदेशानौ नागो विधिरुर्ध्वगः ॥ १७ ॥
अट्ठमहारिद्धीओ हिरि-सिरि-लच्छि-बुद्धि-कंतीओ ।
विजया जया जयन्ती वियरइ अपराजिया वि तहिं ॥ १८ ॥
पूर्वादिक्रमतो दिक्षु एतद्गाथांघ्रिरेकतः ।
एकतः श्रुतदेवी तु पुस्तकाम्भोजशालिनी ॥ १९ ॥
एकतः शान्तिदेवी च करे स्वर्णकमण्डलुः ।
सुधारसभृतं पद्माऽक्षसूत्रावपि बिभ्रती ॥ २० ॥
राजत-स्वर्ण-रत्न[ ानां ]प्राकारत्रितयं दिशेत् ।
चतुर्द्वारं स्फुरद्रत्न-ध्वज-तोरणराजितम् ॥ २१ ॥
भूमण्डलं ततो दिक्षु 'क्षि' विदिक्षु 'ल'कारवान् ।
यन्त्राऽप्मण्डलं सार्धं 'व'कारैः कल्पयाहति ॥ २२ ॥

इति यन्त्रन्यसनम् ॥

प्रागस्याश्वतस्रोऽस्ति निरञ्जनं चैरम्(?)।
आदावन्त्ये मध्ये एकादश जन्युतान्तानि ॥ २३ ॥

दुःशील-निह्नव-गुरुद्रोहक-विध्वस्तचैत्य-यतनीकान्।
पातरपञ्चककृतमपि यो दूरात् त्यजति योग्य इह ॥ २४ ॥

जिनभक्तिर्गुरुसेवी अव्यसन-विवाद-राजभक्तकथः।
मितवाग् जितेन्द्रियमना योग्यः परमेष्ठिविद्यायाः ॥ २५ ॥

पूर्वोत्तरेशदिग्वक्त्रः पद्मासन-सुखासनः।
सौभाग्य-योगमुद्राभृत् कृतादानादिकक्रियः ॥ २६ ॥

'ॐ भूरसि भूतधात्री भूमिशुद्धिं कुरु कुरु।
स्वाहा' इति कौङ्कुमाम्भोभिश्चिन्त्यं तद्भूमिसेचनम् ॥ २७ ॥

'ॐ ह्रीं' विमले तीर्थजलान्तरशुचिः शुचिः।
भवामि स्वाहा' इति शान्तिदेवी मधुरितेक्षणा ॥ २८ ॥

कमण्डलुसुधाम्भोभिर्मां स्नापयतेऽथवा।
षोडश विद्यादेव्यस्तीर्थाम्भोभिर्विचिन्त्यताम् ॥ २९ ॥

यद्वा चन्द्रसुधास्नातः क्षाराब्धौ योजनममम्।
पुण्डरीकं समारूढो द्रष्टुं तानर्हदादिमान् ॥ ३० ॥

पोएहि रेवलपालो कणयमयंको हुयासणो जाणुं।
ऊरु-नाहि-हियय-पट्ठी दो हत्था पाण-मुह-सीसं" ॥ ३१ ॥

धणपालो जयपालो अच्छुत्ता भयवई य वइरुट्टा।
देवो हेरिणगवेसी वज्जधरो रक्खए सव्वं ॥ ३२ ॥

"ॐ श्रीं द्रां णां आं ह्रीं ॐ अ सि आ उ सा क्षिप ॐ स्वाहा ॥"

विदिताष्टाङ्गदिग्रक्षश्चन्द्रादिवर्णमानिमान्।
विद्याक्षरान् स्मरन् शान्तिमसुखं तनुतेऽचिरात् ॥ ३३ ॥

सम्यग्दृशां महाब्रह्मचारिणां गुरुरत्नतः।
गृहीता पठिता सिद्धा विद्या सर्वकरी मता ॥ ३४ ॥

व्याख्यानादौ विवादे वा विहारे जनरञ्जने।
सप्तकृत्वः स्मृता विद्या तत्तत्कार्यप्रसाधिका ॥ ३५ ।

जातीपुष्पयुतैः शालितन्दुलैः सत्फलैरपि ।
जप्त्वा दशांशहोमेन प्रीणिता कुरुते न किम् ? ॥ ३६ ॥

एतद्विद्यान्तरोद्भूतखण्डविद्याफलान्यथ ।
वक्ष्यामि जैनसिद्धान्तरहांसि स्मरणाकृते ॥ ३७ ॥

'सत्त्व'शब्दं विना विद्या गुरुपञ्चकनामभूः ।
द्व्यष्टाक्षरात्महृत्पद्मे गर्भे देवो निरञ्जनः ॥ ३८ ॥

यद्वा—" अर्हत्-सिद्धाचार्योपाध्याय-सर्वसाधुभ्यो नमः ॥ "

हृदम्बुजे इमां विद्यां संस्कृतैः षोडशाक्षरैः ।
लभते द्विशतीं ध्यायन् चतुर्थतपसः फलम् ॥ ३९ ॥

'अरिहंत-सिद्ध'शब्दाज्जपन् विद्यां षडक्षरीम् ।
शतत्रयेण लभते चतुर्थतपसः फलम् ॥ ४० ॥

'अरिहंत'चतुर्वर्णं जपन् ध्यानी चतुःशतीम् ।
लभते दृष्टजैनात्मा चतुर्थतपसः फलम् ॥ ४१ ॥

'अ'वर्णं तु सहस्रार्धं(५००) नाभ्यब्जे कुण्डलीतनुम् ।
ध्यायन्नात्मानमाप्नोति चतुर्थतपसः फलम् ॥ ४२ ॥

गुरुपञ्चकनामाद्यमेकैकमक्षरं तथा ।
नाभौ मूर्ध्नि मुखे कण्ठे हृदि स्मर क्रमान्मुने! ॥ ४३ ॥

'अ'वर्णं नाभिपद्मान्ते 'सि'वर्णं तु शिरोऽम्बुजे ।
'सा' मुखाम्बुजे 'आ' कण्ठे 'उ'कारं हृदये स्मर ॥ ४४ ॥

मन्त्राधीशः पूज्यैरुक्तोऽसौ किन्तु देहरक्षायै ।
शीर्ष-मुख-कण्ठ-हृत्-पदक्रमेण 'असिआउसा' स्थाप्याः ॥ ४५ ॥

प्रणवः पञ्चशून्यान्यग्रे 'असिआउसा नमः' ।
अस्याभ्यासादसौ सिद्धिं प्रयाति गतबन्धनः ॥ ४६ ॥

शाम्यन्ति जन्तवः क्षुद्रा व्यन्तरा ध्यानघातिनः ।
तद् वक्ष्येऽष्टदिक्पत्रे गर्भे सूर्यमहः स्वकम् ॥ ४७ ॥

'ॐ नमो अरिहंताणं' क्रमात् पूर्वादिपत्रगम् ।
मत्याशामेकमेकाहः एकादशशतीं जपेत् ॥ ४८ ॥

ध्यानान्तरायाः शाम्यन्ति मन्त्रस्यास्य प्रभावतः ।
कार्ये सप्रणवो ध्येयः सिद्धये प्रणवं विना ॥ ४९ ॥

यद्वाऽष्टदले पद्मे गर्भे स्यात् प्रथमं पदम् ।
दिक्षु(४) सिद्धादिचतुष्कं विदिक्ष्वन्यचतुष्ककम् ॥ ५० ॥

एतां नवपदीं विद्यां प्रणवादिं विना स्मरेत् ।
'नमो अरिहंताणं' यद्वाऽन्तश्चतुर्दले ॥ ५१ ॥

सिद्धादिकचतुष्कं च दिग्दलेषु मुनीन्दुभिः ।
अपराजितमन्त्रोऽयं मुक्तपापक्षयङ्करः ॥ ५२ ॥

हृदि वा 'नमो सिद्धाणं' अन्तर्दलचतुःक्रमात् ।
पञ्चवर्णमयो मन्त्रो ध्यातः कर्मक्षयङ्करः ॥ ५३ ॥

'श्रीमदृषभादि-वर्धमानान्तेभ्यो नमः'मयः ।
मन्त्रः स्मृतः सर्वसिद्धिकराऽत्र तीर्थशब्दतः ॥ ५४ ॥

'श्रुतदेवता'शब्देन सरस्वती वाच्या ।

"ॐ अर्हन्मुखकमलवासिनि ! पापात्मक्षयङ्करि ! श्रुतज्ञानज्वालासहस्रप्रज्वलिते ! मत्पापं हन हन दह दह क्षां क्षीं क्षूं क्षौं क्षः क्षीरधवले ! अमृतसंभवे ! वं वं हुं हुं स्वाहा ॥"

गणभृद्भिर्जिनैरुक्तां तां विद्यां पापभक्षिणीम् ।
स्मरन्नष्टशतं नित्यं सर्वशास्त्राब्धिपारगः ॥ ५५ ॥

*वाग् माया कमलाबीजे क्ष्रौं क्ष्वीं श्रीं ततः स्फुर स्फुर ।
ॐ क्ष्रां क्ष्रीं ऐं वागीश्वरी भगवती मरुत्प्रभः ॥ ५६ ॥

एवं सारस्वतं मन्त्रं विबुधचन्द्रपूजितम् ।
स्मरेत् सरस्वती देवी साक्षाद् ध्यातुर्वरप्रदा ॥ ५७ ॥

अत्र विशेषः [ कुण्डलिनीवर्णनम् ]—

गुदमध्य-लिङ्गमूले नाभौ हृदि कण्ठ-घण्टिका-भाले ।
मूर्धन्यूर्ध्वे नव षट् कण्ठान्ता पञ्च भालयुताः ॥ ५८ ॥

आधाराख्यं स्वाधिष्ठानं मणिपूर्णमनाहतम् ।
विशुद्धि(द्ध)-लम्बना-ऽऽज्ञा-ब्रह्म-सुषुम्नाख्यया नव ॥ ५९ ॥

---

*मन्त्रोद्धारः—"ऐं ह्रीं श्रीं क्ष्रां क्ष्वां श्रीं स्फुर स्फुर, ॐ क्ष्रां क्ष्रीं ऐं वागीश्वरी भगवती स्वाहा ।"

अम्बुधि रस-दश-सूर्याः षोडश विंशतिः गुणास्तु षोडशकम् ।
दशशतदलमथवाऽन्त्यं षट्कोणं मनसाक्षपदम् ॥ ६० ॥

दलसंख्या इह साद्या ड-क्षान्ता मातृकाक्षराः ।
षट्सु चक्रेषु व्यस्तमिता देहमिदं भारतीयन्त्रम् ॥ ६१ ॥

आधाराद्या विशुद्धयन्ता पञ्चान्तस्तालुशक्तिभृत् ।
आज्ञा भ्रूमध्यतो भाले मनो ब्रह्मणि चन्द्रमाः ॥ ६२ ॥

रक्तारुणं सितं पीतं सितं रक्तत्रयं सितम् ।
चक्रं वर्णा इतः भाग्वदादौ पत्राणि पञ्चसु ॥ ६३ ॥

चतुष्टये क्रमात् सूर्याः त्रि-षट्-द्व्यष्टदलावली ।
तदन्तर्नवबीजानि त्रिष्वाद्यौ त्रिपुराऽथवा ॥ ६४ ॥

नवचक्रान्तः क्रमशो वाग्भवमुख्यानि मन्त्रबीजानि ।
तत्राद्ये रविरोचिषि त्रिकोणमर्केन्दुनाडिभ्याम् ॥ ६५ ॥

भगबीजमेतदूर्ध्वे कुण्डलिनीतन्तुमात्रमभ्रकलम् ।
वाग्भवबीजं श्वेतं ध्यातं सरस्वतीसिद्धिः ॥ ६६ ॥

अरुणमिदं वह्निपुरं ध्यातं मात्रां विनाऽपि वश्यकृते ।
किन्तु समात्रं यद्वा मायान्तःकामबीजमध्ये वा ॥ ६७ ॥

ध्यातं स्वाधिष्ठाने षट्कोणे ह्रीँ स्मरस्य बीजमुत ।
ईकाराङ्कुशताणितशरो नर-स्त्रीकमिह वश्यम् ॥ ६८ ॥

मणिपूर्णे श्रीबीजं जपारुणं वर्णदशकदशदिग्भ्यः ।
ईश्वरताणितवस्तूच्छ्रयमिह वश्यं च लाभकरम् ॥ ६९ ॥

भालान्तर्भ्रूमध्ये त्रिकोण-कोदण्डखेचरीत्याख्यम् ।
अस्योर्ध्वे मध्ये वा माया-स्मरबीजयोरेकम् ॥ ७० ॥

आधारान्तर्वाग्भवकुण्डलिनीतन्तुबद्धवश्यशिरः ।
कृत्वाऽधः स्थितमरुणं ध्यातं बीजान्तरुत वश्यम् ॥ ७१ ॥

यद्वा—

भ्रूमध्यान्तः 'स्त्रीँ' स्त्रीँ' बीजं निर्यदमृतवर्षभरम् ।
ध्यातं विषरोगहरं त्रिकोणके मूर्ध्नि पूर्ववत् स्वरम् ॥ ७२ ॥

यदिवा—

कुण्डलिनीतन्तुद्युतिसंभृतमूर्तीनि सर्वबीजानि ।
शान्त्यादिसंपदे स्युरित्येष गुरुक्रमोऽस्माकम् ॥ ७३ ॥

किं बीजैरिह शक्तिः कुण्डलिनी सर्वदेववर्णतनुः ।
रवि-चन्द्रान्तर्ध्याना मुक्त्यै भुक्त्यै च गुरुसारम् ॥ ७४ ॥

भ्रूमध्य-कण्ठ-हृदये नाभौ कोणे त्रयान्तराध्यातम् ।
परमेष्ठिपञ्चकमयं मायाबीजं महासिद्ध्यै ॥ ७५ ॥

विबुधचन्द्रगणभृच्छिष्यः श्रीसिंहतिलकसूरिरिमम् ।
परमेष्ठिमन्त्रकल्पं लिलेख सह्यादेवताभक्त्या ॥ ७६ ॥

इति परमेष्ठिमन्त्रकल्प ॥

---

## १६. परिशिष्टम् ।

### श्रीसिंहतिलकसूरिरचित

### लघुनमस्कारचक्रम् ॥

—*—

नत्वा विबुधचन्द्रार्च्यं यशोदेवमुनिं गुरुम् ।
वक्ष्ये लघुनमस्कारचक्रं साह्याऽदेवता ॥ १ ॥

द्वयेऽष्टरेखाभिरष्टारं सप्तभिर्द्व्यभिः परम् ।
रेखाभिरष्टवलयं चक्रं तुम्बे जिनाक्षरः( रम् ) ॥ २ ॥

"ॐ नमो अरिहंताणं" आद्यं पदचतुष्टयम् ।
अरमध्ये द्विरावर्त्यं लेख्यं प्रणवपूर्वकम् ॥ ३ ॥

पाशाङ्कुशाभयैः सार्द्धं वरदोऽरान्तरे क्रमात् ।
लिख्यतेऽमु[ ष्यो ]रान्तेऽय "आँ क्रौं ह्रीं श्रीँ" चतुष्टयम् ॥४॥

प्राक् "प्रणवो नमो लोए सव्वसाहूणं" इत्यपि ।
प्रथमे वलये लेख्यं प्राग्वत् पञ्चपदीफलम् ॥ ५ ॥

"ॐ नमो चत्तारि मंगलं अरिहंता मंगलं सिद्धा ।"
जाव "धम्मं सरणं पवज्जामि" एवं द्वादशपदी ॥ ६ ॥

अर्हत्-सिद्धाः साधुर्धर्मो मङ्गलचतुष्टयं तद्वत् ।
लोकत्तरशरणावपि लेख्यं वलये द्वितीये तु ॥ ७ ॥

द्वादशान्तमनाः साधुः पञ्चदशपदीमिमाम् ।
विद्यां समणवां ध्यायन् शिवं यात्यपफलमपः ॥ ८ ॥

उक्तं च —

"मँङ्गल-लोँकोत्तम-शर्ँण्यपदसमूहं सुसंयमी स्मरति ।
अविकलमेकाग्रतया लभते स स्वर्गमपवर्गम्" ॥ ९ ॥

तृतीये वलये "ॐ-माया"युता वर्णसप्ततिः(७०) ।
बीजाक्षरचतुष्कं च जिनबीजपदाश्रयम् ॥ १० ॥

"ॐ ह्रीँ श्रीँ ऽर्हँ"

"ॐ नमो भगवओ तिहुयणपुज्जस्स वद्धमाणस्स ।
जस्सेयं खलु चक्कं जलंतमागच्छए पयडं ॥ ११ ॥

"आयासं पायालं लोयाणं तह य चेव भूयाणं ।
जूए वा रयणे वा विवं रायंगणे वावि ॥ १२ ॥

एवं च "थंभणे मोहणे तह य सव्वजीवसत्ताणं ।
अपराजिओ भवामि स्वाहा" इय मंतविन्नासो ॥ १३ ॥

चैत्रेऽष्टाहिकायां तु त्रयोदश्यां विशेषतः ।
सहस्रैः जातिकुसुमैः सप्तभिर्वीरमर्चयेत् ॥ १४ ॥

जापैः सहस्रैरेतैः स्यादखण्डैः शालितन्दुलैः ।
दृढब्रह्मव्रतस्यैवं सिद्धाऽसौ पठतोऽथवा ॥ १५ ॥

सन्ध्याद्वयं स्मरन्नेवं व्यसनैर्ग्रह-मुद्गलैः ।
द्विपादैः श्वापदैर्दुष्टैर्न पराजीयते क्वचित् ॥ १६ ॥

वन्ध्यायां काकवन्ध्याया निन्द्-दुर्भगयोषितोः ।
वरं न लभते कन्या या तस्या विधिरेषकः ॥ १७ ॥

चैत्ये सातिशये वेश्मैकदेशे शुचिभूतले ।
कृत्वा त्रिवर्णचूर्णेन त्रिरेखा-पट्-चतुरस्रकान् ॥ १८ ॥

चतुर्द्वारं चतुर्दिक्षु पूर्वादौ वज्र-मुद्गरौ ।
परशु-शक्तिमालिख्य मध्येऽष्टपत्रमम्बुजम् ॥ १९ ॥

प्रतिपत्रं सुरवर्णिमिश्रा अष्टौ च पुत्रकाः ।
तदूर्ध्वे कलशानष्टौ वक्त्रकुसुमसत्फलान् ॥ २० ॥
तीर्थाम्भोभिर्जिनस्नात्रसुगन्धिजलमिश्रितैः ।
पूरयित्वा सुवस्त्रेणाच्छादितानञ्जगर्भके ॥ २१ ॥
नव घटद्वयं रक्तं पूर्ववज्जलसंभृतम् ।
पुष्पमालाञ्चसत्पत्र-फल-पुष्पं विधाय च ॥ २२ ॥
अपराह्णे तथा सायं मन्त्रेणानेन कुम्भगम् ।
अभिमन्त्र्य जलं सर्वमष्टाधिकशतं मुनिः ॥ २३ ॥
गन्ध-धूप-सुमैर्दीपैरक्षतैर्बलिभिर्नवैः ।
सम्यगभ्यर्च्य तत् सर्वं विदधीत सुवाससा ॥ २४ ॥
निशायाः पश्चिमे यामे शयितेषु द्विकेष्विमाम् ।
एकदेशेन नग्नां स्त्रीं दुर्भगाद्येकदूषणाम् ॥ २५ ॥
सप्तनदी-द्वितटी-कुम्भकृद्-गजराजवेश्मनः ।
सप्तवाल्मीकफलितक्षेत्रमृत्स्नाविलेपनम् ॥ २६ ॥
कृत्वैकत्र च कुम्भाम्भोऽभिमन्त्र्य स्नपितामथ ।
तद्वासस्त्याजिता साऽन्यवस्त्रेणापिहिताङ्गिका ॥ २७ ॥
निषिद्धपृष्ठतो दृष्टिर्नेतव्याऽऽत्मगृहं ततः ।
प्रातः सूर्योदये सूरिर्मण्डलमष्टपूजया ॥ २८ ॥
अभ्यर्च्यानेन मन्त्रेण मध्ये संस्थाप्य तां स्त्रियम् ।
सप्तगृहनीतस्तृणैः सप्तभिः कार्पासकैः ॥ २९ ॥
निर्भर्त्स्यानेन मन्त्रेण त्रिधा प्रागुक्तमुद्रया ।
पुत्तलिकयाऽपि निर्भर्त्स्य समुद्धृत्य चतुष्पथे ॥ ३० ॥
सर्वमेतत् परिक्षिप्य स्त्रियं प्रागुक्तमृत्स्नया ।
विलिप्य मन्त्रपुञ्जैस्तु शेषकुम्भाम्भसां भरैः ॥ ३१ ॥
संस्नप्य स्वगृहं प्राग्वद् नयेद् वस्त्रयादिकं तदा ।
शेषे च देयमेतस्यै सप्तरात्रमयं क्रमः ॥ ३२ ॥
सप्तमेऽह्नि जिनं सद्यं संपूज्य लब्धशोषिका ।
सौभाग्यादि सा स्यादेवं ग्रहग्रहे शिशोः ॥ ३३ ॥

अत्र कूटाक्षराः सर्वे सस्वरा अष्टवर्गतः ।
ते स्युर्वृद्धनमस्कारचक्रे अ(तद)ष्टारक्रमात् ॥ ३४ ॥
"ॐ नमः" पूर्वं 'थंभेइ०' इति गाथाचतुर्थके ।
वलये योजनशतं यावत् स्तम्भक्रिया भवेत् ॥ ३५ ॥
"ॐ नमो थंभेइ जलं जलणं चिंतियमित्तोवि पंचनवकारो ।
अरि-मारि-चोर-राउलघोरुवसग्गं पणासेइ" ॥ ३६ ॥

अत्र विधिः—

शिलापट्टेऽथ भूर्जे वा फलके क्षीरवृक्षजे ।
कुं-गो-गोमय-गोक्षीरैर्जात्यादिलेखनीकरः ॥ ३७ ॥

पद्ममष्टदलमध्ये 'ह'पिण्डं तस्य चान्तरा ।
गर्भवत्याः स्त्रियो नाम प्रतिपत्रं 'ह'पिण्डकम् ॥ ३८ ॥
पद्मस्य बहिर्वलये गाथा 'थंभेइ०' अग्रतः ।
अमुकस्याः स्त्रियो गर्भं स्तम्भामीति लिखेदथ ॥ ॥ ३९ ॥
बहिर्भूमण्डलं दिक्षु 'ह'पिण्डाष्टकमालिखेत् ।
शिलापट्टादि संपुटय घनं बद्ध्वा शुचि क्षितौ ॥ ४० ॥
त्रिसन्ध्यमष्टधाऽभ्यर्च्य जपेत् साष्टसहस्रकम् ।
यावद् वर्षार्धवर्षं वा गर्भस्तम्भोऽथवा विधिः ॥ ४१ ॥
एतद् भूर्यादिकं सिक्त्थकेनावेष्ट्य धृताम्बरा ।
अर्च्यते पूर्ववत् स्तम्भस्तत्र कार्ये समर्थ्यते ॥ ४२ ॥
तत् समुद्धृत्य दुग्धेनाथवा गन्धाम्बुना स्मरन् ।
मन्त्रं प्रक्षालयेदेवं प्रसूते सा सुतं सुखम् ॥ ४३ ॥
अग्निस्तम्भे अष्टपत्रपद्ममध्ये दलान्तरा ।
'ग'पिण्डं बहिर्वलये गाथा सृष्टया विलिख्यते ॥ ४४ ॥
भूमण्डलाष्टदिग्भागे 'ग'पिण्डं पूर्ववद् विधिः ।
जापः शतं सहस्रं वाऽग्निस्तम्भो धर्मदर्शिनाम् ॥ ४५ ॥
अष्टदलेऽम्बुजान्तश्च 'ध'पिण्डं वलये बहिः ।
गाथा भूमण्डले दिक्षु 'ध'पिण्डं पूर्ववद् विधिः ॥ ४६ ॥

पद्ममष्टदलं फ्रौं 'फ'पिण्डान्तः साधकाभिधा ।
प्रतिपत्रं 'फ'पिण्डं च गाथा स्याद् वलये बहिः ॥ ४७ ॥
भूमण्डलाष्टदिग्भागे 'फ'पिण्डं पूर्ववत् क्रिया ।
जापः शतं सहस्रं वा तुल्या(ला)-दिव्यनिषेधनम् ॥ ४८ ॥
पद्ममष्टदलं मध्ये ह्रौं स्याद् 'ह'पिण्डमध्यगम् ।
साध्यनाम दलेष्वन्तः 'ह'पिण्डं वलये बहिः ॥ ४९ ॥
गाथा भूमण्डलं दिक्षु 'ह'पिण्डं पूर्ववद् विधिः ।
जापः शतं सहस्रं वा घटसर्पनिषेधनम् ॥ ५० ॥
पद्ममष्टदलं मध्ये क्ष्रौं 'क्ष'पिण्डमध्यगम् ।
साध्यनाम प्रतिपत्रे 'क्ष'पिण्डं पूर्ववद् विधिः ॥ ५१ ॥
गाथा भूमण्डलं दिक्षु 'क्ष'पिण्डं पूर्ववद् विधिः ।
जापः शतं सहस्रं वा जयेत् पक्षादिजं विषम् ॥ ५२ ॥
पद्ममष्टदलं गर्भे 'क्ष'पिण्डं साध्यनामयुक् ।
'क्ष'पिण्डं प्रतिपत्रान्तः सगाथं वल्यं बहिः ॥ ५३ ॥
भूमण्डलाष्टदिग्भागे 'क्ष'पिण्डं पूर्ववत् क्रिया ।
जिह्वा-रण-गति-क्रोधव्यवहारनिषेधनम् ॥ ५४ ॥
देश-ग्राम-पुरं यद्वा गृहस्यैकस्य वा गवाम् ।
शाकिन्यादिकृतां मारिं निषेद्धुमिह सुव्रती ॥ ५५ ॥
भूर्यादौ चक्रमालिख्य तद्देशाद्यभिधायुतम् ।
कृत्वा रक्षां सिक्थकेनावेष्ट्य मन्त्राभिमन्त्रितम् ॥ ५६ ॥
कांस्यपात्रे नवे शान्तिप्रतिमाचरणाग्रतः ।
रक्षां वां त्रिमधुरेणाकण्ठं शान्तिं तु पूरयेत् ॥ ५७ ॥

शान्तिपाठः—

मुक्त्वा स्त्री-गज-रत्न-चक्रमहतीं राज्यश्रियं श्रेयसे
प्रव्रज्या दुरिताश्रयप्रमथनी येन श्रिताऽभूत् पुरा ।
मृत्यु-व्याधि-जरा-वियोगमगमत् स्थानं च योऽत्यद्भुतं
तं वन्दे मुनिमप्रमेयवृषभं सेन्द्रामराभ्यर्चितम् ॥ ५८ ॥

एवं 'बृहन्नमस्कार'प्रोक्तं श्रीशान्तिमन्त्रकम् ।

यद्वा—

'थंभेइ जलं०' इत्यादिगाथां जपन् शताधिकाम् ॥ ५९ ॥
शुक्लवस्त्रेण संछाद्यं त्रिसन्ध्यमष्टपूजया ।
त्रिदिनं त्रिदिनस्यान्ते महापूजापुरस्सरम् ॥ ६० ॥
अभिषेकजलं तत् तु क्षेप्यं श्रीकलशान्तरे ।
श्रीशान्तिप्रतिमां हस्ति-शिबिका-रथमूर्धनि ॥ ६१ ॥
शुक्लवस्त्रवृताङ्गस्य नरस्य ब्रह्मचारिणः ।
कुलशुद्धस्य मान्यस्य मूर्ध्नि कृत्वा सचामराम् ॥ ६२ ॥
छत्रेण सहितां चन्द्रोदये ध्वजस्रजाञ्चिताम् ।
तूर्यत्रिकोल्लसद्‌वातां प्रदीपद्युतिभासुराम् ॥ ६३ ॥
चतुर्विधेन सङ्घेन संयुतः सूरिरुद्यमी ।
मारिगृहीतग्रामाद्यष्टदिक्षु प्रददेद् बलिम् ॥ ६४ ॥
दिने तस्मिन्नमारिः स्यात् पटहोद्‌घोषपूर्वकम् ।
चतुर्विधाय सङ्घाय भक्त्या दानं दिशेन्मुनिः ॥ ६५ ॥
दानं दीनादिषु प्राज्यं देयमेवंकृते सति ।
मारिर्निवर्तते किन्तु तत्कुम्भजलसेचनात् ॥ ६६ ॥
गोमार्यादिषु गोवाटप्रवेशे श्रावकैः शुभैः ।
तत्कुम्भजलसिक्ता गौर्मूर्ध्नि गोमारिवारणम् ॥ ६७ ॥
पञ्चमे वलये लेख्या 'ॐ नमः' पूर्वमेषिका ।
'स्वाहा'न्ता गाथिका क्षेत्र-स्वसैन्यत्राणकारिणी ॥ ६८ ॥
"अट्ठेव य अट्ठसयं अट्ठसहस्सा य अट्ठकोडीओ ।
रक्खंतु मे सरीरं देवासुरपणमिया सिद्धा" ॥ ६९ ॥
भूर्यादावेषिका गाथा लिखिता चन्दनादिभिः ।
रक्ष्या जिनान्तिके पूज्या बद्धा दोषज्वरापहा ॥ ७० ॥
'ॐ नमो अरिहंताणं' पूर्वं 'अट्ठविहा'दिकाम् ।
गाथां वलये षष्ठे 'स्वाहा'न्तां विलिखेन्मुनिः ॥ ७१ ॥'

"अट्ठविहकम्ममुक्को तिलोयपुज्जो य संथुओ भयवं ।
अमर-नर-रायमहिओ अणाइनिहणो सिवं दिसउ" ॥ ७२ ॥

सप्तमे वलये 'ॐ' प्राक् 'नमो सिद्धाणं' इत्यतः ।
'वय०' इत्याद्यां लिखेद् गाथां 'स्वाहा'न्तां शिवगामिनीम् ॥ ७३॥

"वयनियमसंयमरहो पंचनमोकारसारहिनिउत्तो ।
नाणतुरंगमजुत्तो नेइ पुरं परमनिव्वाणं स्वाहा" ॥ ७४ ॥

'ॐ'प्राग् 'धणु'द्वयं तस्मा'न्महाधणु महाधणु ।
स्वाहा' इतीमां धनुर्विद्यामष्टमे वलये लिखेत् ॥ ७५ ॥

कायोत्सर्गे उपोष्यैनां श्रीवीरप्रतिमाग्रतः ।
अष्टोत्तरं सहस्रं प्राग् जपेत् सिद्धा मुनेरसौ ॥ ७६ ॥

स्मृत्वैतां पथि धूल्यन्तरालिख्य सशरं धनुः ।
आक्रम्य वामपादेन मौनी गच्छेन्न दस्युतः ॥ ७७ ॥

युद्धकाले जिनं वीरं संपूज्याष्टशतः स्मृतेः ।
प्राग्वद् धनुःक्रियां कृत्वा युद्धे गच्छेन्न शस्त्रभीः ॥ ७८ ॥

परेषां सम्मुखीभूतां धनुर्विद्यां महोमयीम् ।
इन्द्रचापसदृक्कान्तिं ध्यायेन्मन्त्रं पठेदमुम् ॥ ७९ ॥

तद्ध्यानावेशतो वैरिसेना पराङ्मुखी तथा ।
सैन्यद्वयं प्रतीपं चेद् ध्यायते सैन्यसंधिदा ॥ ८० ॥

वलयाष्टबहिर्दिक्षु पद्मं षोडशपत्रकम् ।
प्रतिपत्रं विलिख्यन्ते 'अं'आद्याः षोडशस्वराः ॥ ८१ ॥

आदिद्व्यष्टस्वराग्रे तत् प्रत्येकं 'हूं' इहाक्षरम् ।
षोडशास्त्रसंबद्धं 'हूं ह्रां ह्रिं ह्रीं'मुखं लिखेत् ॥ ८२ ॥

एतदूर्ध्वं द्व्यष्टदलं पद्मं तु प्रतिपत्रकम् ।
षोडश विद्या लेख्या या मन्त्रबीजयुता तथा ॥ ८३ ॥

१ 'ॐ ह्रीं रोहिण्यै अँ नमः ।'
२. 'ॐ ह्रीं प्रज्ञप्त्यै आँ नमः ।'
३. 'ॐ ह्रीं वज्रशृङ्खलायै इँ नमः ।'
४. 'ॐ ह्रीं वज्राङ्कुश्यै ईं नमः ।'

५. 'ॐ शाँ अप्रतिचक्रायै उं नमः ।'
६. 'ॐ षाँ पुरुषदत्तायै ऊँ नमः ।'
७. 'ॐ साँ काल्यै ऋँ नमः ।'
८. 'ॐ हाँ महाकाल्यै ॠँ नमः ।'
९. 'ॐ यूँ गौर्यै लृँ नमः ।'
१०. ॐ रूँ गान्धार्यै लॄँ नमः ।'
११. 'ॐ लूँ सर्वास्त्रमहाज्वालायै एँ नमः ।'
१२. 'ॐ वूँ मानव्यै ऐँ नमः ।'
१३. 'ॐ शूँ वैरोट्यायै ओँ नमः ।'
१४. 'ॐ षूँ अच्छुप्तायै औँ नमः ।'
१५. 'ॐ सूँ मानस्यै अँ नमः ।'
१६. 'ॐ हूँ महामानस्यै अँः नमः ।'

इति मन्त्रबीजपूर्वा विद्यादेव्यो दलेषु स्युः ॥

देवीषोडशपत्राग्रे परमेष्ठिपदाक्षराः ।
षोडशोर्ध्वे स्फुरच्चन्द्रबिन्दवो ज्योतिरञ्चिताः ॥ ८४ ॥

'अरिहंत-सिद्ध-आयरिय-उवज्झाय-साहुवन्नियं बिंदुं ।
जोयणसयप्पमाणं जालासयसहस्सदिप्पंतं ॥ ८५ ॥

'सोलससु अक्खरेहिं इक्किक्कं अक्खरं जगुज्जोयं ।
भवसयसहस्समहणं जम्मि ठिओ पंचनवकारो' ॥ ८६ ॥

उक्तं च– बिन्दुं विनाऽपीत्यादिचतुःश्लोकी ॥

चतुर्षु पट्कोणेषु चँतुरष्ट-दशँ-द्विकँम् ।
अष्टापदजिना ज्ञेयाः 'चत्तारि०' इत्यादिगाथया ॥ ८७ ॥

यद्वाऽष्टचत्वारिंशत्सहस्रा द्व्यधिकं शतम् ।
जातीसुमनसां जापो होमो दशांशभागय ॥ ८८ ॥

'श्रीइन्द्रभूतये स्वाहा' 'ॐ प्रभासाय' पूर्ववत् ।
पट्स्यैशानकोणे द्वौ गाथैका पूर्वदिग्गता ॥ ८९ ॥

'सोमे अ वग्गु वग्गु सुमणे सोमणसे तह य महुमहुरे ।
किलि किलि अप्पडिचक्का हिलि हिलि देवीओ सव्वाओ ॥ ९० ॥

'ॐ अग्निभूतये स्वाहा' 'स्वाहा'न्ते 'वायुभूतये'।
पटस्याग्नेयकोणे द्वौ मन्त्रावेकस्तयोरधः ॥ ९१ ॥

'ॐ असिआउसा हुलुहुलु चुलुद्वयं' ततः।
'इच्छियं मे कुरुद्वन्द्वं स्वाहा' सर्वार्थसिद्धिदा ॥ ९२ ॥

दक्षिणस्यां दिशि 'ॐ'प्राग् 'व्यक्तायाथ मरुन्नमः'।
'ॐ' प्राक् 'सुधर्मस्वामिने स्वाहा' इति च पदद्वयम् ॥ ९३ ॥

नैर्ऋते 'मणवः' पूर्वे 'मण्डिताय मरुन्नमः'।
'मणवो मौर्यपुत्राय स्वाहा' इति गणभृद्द्वयम् ॥ ९४ ॥

पश्चिमायां 'वाय्वग्निभ्यां स्वाहा'न्ते 'मणवः' पुरः।
'अकम्पिताचलभ्राता मेतार्यः' इति मध्यतः ॥ ९५ ॥

प्राच्यां गायेश[ः] काष्ठादौ चतुर्विदिक् त्रिदिक् क्रमात्।
द्वौ द्वावेकैकश्च सूरिराजान इति मे मतिः॥ ९६ ॥

यद्वा—

प्राच्यां गुरुरतः प्राग्वद् गौतमासनमम्बुजम्।
गाथावीजयुतं ध्यानं वाच्यं प्राक् सूरियन्त्रतः ॥ ९७ ॥

बहिश्चतुर्दलं पद्मं चतुर्दिक्षु लिखेदिदम्।
'ॐ नमो सव्वसिद्धाणं' पदं सर्वार्थसाधकम् ॥ ९८ ॥

अष्टारमौलिकुम्भेषु 'जम्भे' 'मोहे' चतुष्टयम्।
द्विरावर्त्य क्रमाल्लेख्यमयं मन्त्रश्च पश्चिमे ॥ ९९ ॥

'ॐ नमो अरिहंताणं एहि एहि नंदे महानंदे पंथे बंधे दुप्पयं बंधे चउप्पयं बंधे घोरं आसीविसं बंधे जाव गंठिं न मुञ्चामि' ॥

इमामष्टशतं स्मृत्वा कृत्वा ग्रन्थिं स्ववाससि।
पथि गम्यं न चौराद्युपद्रवः छोटयते स्थितौ ॥ १०० ॥

'मायाबीजं' त्रिरेखाभिरुपर्यावेष्ट्यमन्ततः।
'क्रौं' भूमण्डलं यद्वा वारुणं स्वस्ववर्णकम् ॥ १०१ ॥

मध्ये 'ऌहूँ'बीजमावेष्ट्यं केचिद् रत्नत्रयाक्षरैः।
केचिच्च बीजचक्रेण गुरुरेव ममा मतः ॥ १०२ ॥

ध्यानम्—

अथ ध्यानविधिं वक्ष्ये जितेन्द्रियः दृढव्रतः ।
सम्यग्दृष् गुरुभक्तश्च सत्यवाग् मन्त्रसाधकः ॥ १०३ ॥

एकान्ते शुचिभूमौ स पूर्वोत्तराशादिङ्मुखः ।
तीर्थाम्भो-गोमयरसैः सिक्तां भूमिं विचिन्तयेत् ॥ १०४ ॥

सहस्रदलपद्मान्तःपर्यङ्कासनसंश्रितम् ।
मसन्नाभिर्जयाद्यष्टसुरीभिस्तीर्थवारिभिः ॥ १०५ ॥

भृतैः सुवर्णभृङ्गारैर्वक्त्रदत्ताम्बुजैः स्वकम् ।
स्नप्यमानं विचिन्त्याशु मन्त्रं हृदि विचिन्तयेत् ॥ १०६ ॥

'ॐ नमो अरिहंताणं अशुचिः शुचिरित्यतः ।
भवामि स्वाहा' इति स्नातः कुर्याद् देहस्य रक्षणम् ॥ १०७ ॥

१. 'ॐ नमो अरिहंताणं ह्रीँ हृदयं रक्ष रक्ष हुं फट् स्वाहा ।'
२. 'ॐ नमो सिद्धाणं हर हर शिरो रक्ष रक्ष हुं फट् स्वाहा ।'
३. 'ॐ नमो आयरियाणं ह्रीँ शिखां रक्ष रक्ष हुं फट् स्वाहा ।'
४. 'ॐ नमो उवज्झायाणं एहि भगवति ! चक्रे ! कवचवज्रिणि ! हुं फट् स्वाहा ।'
५. 'ॐ नमो लोए सव्वसाहूणं क्षिप्रं साधय साधय दुष्टं वज्रहस्ते ! शूलिनि ! रक्ष रक्ष आत्मरक्षा सर्वरक्षा हुं फट् स्वाहा ॥'

कृत्वाऽमीभिः स्वाङ्गरक्षां दिग्बन्धं च 'इन्द्रभूतये ।
स्वाहा'धैः सर्वगणभृदाह्वानं क्रियते ततः ॥ १०८ ॥

त्रिभाकारस्फुरज्ज्योतिः समवसृतिमध्यगम् ।
चतुःषष्टिसुराधीशैः पूज्यमानक्रमाम्बुजम् ॥ १०९ ॥

छत्रत्रयं पुष्पवृष्टि-मृगेन्द्रासन-चामराः ।
अशोक-दुन्दुभि-दिव्यध्वनिभांमण्डलान्यपि ॥ ११० ॥

इत्यष्टभिः प्रातिहार्यैर्भूषितं सिंहलाञ्छनम् ।
संसदन्तः सुवर्णाभं वर्धमानं जिनं हृदि ॥ १११ ॥

साक्षाद् विलोकयन् ध्याता तल्लीनाक्षिमना अमुम् ।
अष्टोत्तरं शतं मन्त्रं सूरिमन्त्रसमं जपेत् ॥ ११२ ॥

एतद् यन्त्रं जैनधर्मचक्रमष्टारभासुरम् ।
अष्टदिक्षु स्फुरद्भाभिः शतयोजनदीपकम् ॥ ११३ ॥
तच्छायाक्रान्तवित्रस्तदुरितं सर्वपूजितम् ।
आत्मानं च स्मरेन्नित्यं तस्य स्युरष्टसिद्धयः ॥ ११४ ॥
मोक्षाभिचार-मारेषु शान्त्याकृष्टयादिषु क्रमात् ।
अङ्गुष्ठादि-कनिष्ठान्तमक्षसूत्रं करे धरेत् ॥ ११५ ॥
इति लघुनमस्कारचक्रम् ॥

—*—

## १७. परिशिष्टम् ।

### श्रीसिंहतिलकसूरिरचितं
### ऋषिमण्डलस्तवयन्त्रालेखनम् ॥

*

श्रीवर्द्धमानमीशं ध्यात्वा विबुधचन्द्रसूरिनतम् ।
ऋषिमण्डलस्तवादिह यन्त्रस्यालेखनं वक्ष्ये ॥ १ ॥
सौवर्ण-रूप्य-कांस्ये पटात्मदेहेऽर्चनाकृते स्थाप्यम् ।
रक्षायै भूर्जदले कर्पूराद्यैः सुवर्णलेखिन्या ॥ २ ॥
बहिः क्षाराब्धिवलयं श्यामलं लग्नतोऽक्षरैः ।
सपट्पञ्चाशता(५६) व्याप्तमन्तरद्वीपभूमिभिः ॥ ३ ॥
मध्ये जम्बूद्वीपस्तदष्टकाष्ठाक्रमेण संस्थाप्यम् ।
अर्हत्-सिद्धाद्यभिधापञ्चयुग् ज्ञान-दर्शन-चारित्रम् ॥ ४ ॥
आदावंशो फणी शम्भुर्वर्णश्चन्द्रकलाश्रयुक् ।
द्वि-चतुः-पञ्च-षट्-सप्ताष्ट-दशार्कस्वरश्च क्रमात् ॥ ५ ॥
'परमेष्ठ्यक्षराद्याद्याः पञ्चातो ज्ञान-दर्शन- ।
चारित्रेभ्यो नमः' मन्त्रः पदवीजाष्टकोज्ज्वलः ॥ ६ ॥

[ मन्त्रोद्धारः—जाप्यमन्त्रः— ]
"ॐ ह्राँ ह्रीँ ह्रुँ ह्रूँ ह्रेँ ह्रैँ ह्रौँ ह्रः अ सि आ उ सा ज्ञान-दर्शन-चारित्रेभ्यो नमः ॥"

आदौ 'ॐ ह्राँ' प्रभृत्येकं बीजयुग्मं ततो नमः ।
मध्येऽर्हद्भ्यः सिद्धेभ्य इति दिक्षु पदाष्टकम् ॥ ७ ॥
एषामधः क्रमादिन्द्राग्नि-यमा नैर्ऋतिस्तथा ।
वरुणो वायु-कुबेरावीशानश्च यथाक्रमम् ॥ ८ ॥

एषामधो रविश्चन्द्र-मङ्गलौ बुध-वाक्पती ।
भार्गवः शनि-राहू च लिखेद् दिक्षु ग्रहाष्टकम् ॥ ९ ॥
अष्टमन्त्रपदै रक्षा स्वशिखा-मस्तकाक्षिषु ।
नासिका-मुख-घण्टीषु नाभि-पादान्तयोः क्रमात् ॥ १० ॥
तन्मध्ये पीतवलयं सुमेरुस्ताम्रिरक्षरम् ।
तदन्तः द्विर्त्रिशैः कूटैः काद्यैः क्षान्तैः सुधाशुभम् ॥ ११ ॥
तदूर्ध्वं ह्रीँ स्वरान्तस्थ-सान्तसिंहासनो जिनः ।
ह्रीँ त्रिरेखयाऽऽवेष्ट्य वहिर्वारुणमण्डलम् ॥ १२ ॥
पार्थिवीधारणायुक्त्या पिण्डस्थं मन्त्रयुक्तितः ।
पदस्थमर्हतो रूपवद् यन्त्रं रूपयुक् क्रमात् ॥ १३ ॥
तिर्यग्लोकसमः क्षीराम्बुधिस्तस्यान्तरमम्बुजम् ।
जम्बूद्वीपः सदिक्पत्रं स्वर्णाद्रिस्तत्र कर्णिका ॥ १४ ॥
सिंहासनेऽत्र चन्द्राभे आत्मानन्दं परं श्रितः ।
अर्हन्मयो हृदि ध्येयः पार्थिवीधारणेत्यसौ ॥ १५ ॥
रेफः सान्तः शिरश्चन्द्रकलाभ्रं नाद ईश(स्व)रः ।
सशिरो-रेफ-हः पीतः कला रक्ताऽसितं वियत् ॥ १६ ॥
नादः श्वेतः स्वरः तुर्यो नीलो वर्णानुगा जिनाः ।
चन्द्राभ-सुविधी नादः शून्यं श्रीनेमि-सुव्रतौ ॥ १७ ॥
कला षडर्कसंख्यौ स्यात् पार्श्व[ श्र ] मल्लिरीश्व(स्व)रः ।
सशिरो-रेफ-हो द्व्यष्टौ जिना इति चतुर्युगम् ॥ १८ ॥
नादोऽर्हन्तः कला सिद्धाः सान्तः सूरिः स्वरोऽपरे ।
बिन्दुः साधुरितः पञ्चपरमेष्ठिमयस्त्वसौ ॥ १९ ॥
अन्यत्र विशेष –
अर्हन्तो वृत्तकला त्रिकोण-सिद्धास्तु शीर्षकं सूरिः ।
चन्द्रकलोपाध्यायो दीर्घकला साधुरिह पञ्च ॥ २० ॥
अर्हन्तः शशि-सुविधी सिद्धा पद्माभ-वासुपूज्यजिनौ ।
धर्माचार्याः षोडश मल्लिः पार्श्वोऽप्युपाध्यायः ॥ २१ ॥
सुव्रत-नेमी साधुर्जिनरूपः शक्ति-शिरमयस्त्वेषः ।
त्रिपुरपमूर्तिर्ध्येयोऽन्यस्यवपुः सर्वसर्वबीजमिदम् ॥ २२ ॥
जैनमिह धर्मचक्रं तच्छायागर्भगं न पश्यन्ति ।
ड र ल क स (ग) ह जा (या)ऽहि-गजाः रक्षोऽपि सिंह-दुष्ट-नृपाः ॥२३

श्रीगौतमस्य मुद्राभिर्लब्धिभिर्मो निधीश्वरम् ।
त्रैलोक्यवासिनो देवा देव्यो रक्षन्तु सर्वतः ॥ २४ ॥
ॐ ह्रीं श्रीश्च धृतिर्लक्ष्मीर्गौरी चण्डी सरस्वती ।
जयाऽम्बा विजयेत्याद्या विद्या यच्छन्तु मे धृतिम् ॥ २५ ॥
भ्रष्टराज्यादयो यं यमर्थमिच्छन्ति तं नराः ।
लभन्तेऽस्य स्मृतेर्युद्धाद्यापदश्च तरन्त्यमी ॥ २६ ॥
भूर्जपत्रान्तरालिख्य रक्षा कण्ठ-शिरः-करे ।
मुद्गल-ग्रह-भूतार्तिहृद् वश्यादिप्रसाधनी ॥ २७ ॥
त्रैलोक्यवर्तिजैनानां बिम्बैर्दृष्टैः स्तुतैर्नतैः ।
यत् फलं तत् फलं बीजस्मृतावेतन्महद् रहः ॥ २८ ॥
अष्टाचाम्लतपःपूर्वं जिनानभ्यर्च्य सिद्धये ।
अष्टजातीसहस्रैस्तु जापो होमो दशांशतः ॥ २९ ॥
अष्टमासान् स्मरेत् प्रातर्बीजमेतच्छताधिकम् (१०८) ।
स पश्येदार्हतं बिम्बं सप्तान्तर्भवसिद्धये ॥ ३० ॥
सम्यग्दृशे विनीताय ब्रह्मव्रतभृते इदम् ।
देयं मिथ्यादृशे नैव जै( जि )नाज्ञाभङ्गदूषणः( णम् ) ॥ ३१ ॥
परमेष्ठिपदानां तु विशेषः पूर्वयन्त्रतः ।
ज्ञेयो रत्नत्रयस्याथ विशेषः कश्चिदुच्यते ॥ ३२ ॥
ज्ञान-दर्शन-चारित्र-तपांसीति स्मरन् मुनिः ।
शतमष्टोत्तरं लब्ध्वा( ब्धा ) चतुर्थतपसः फलम् ॥ ३३ ॥
कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च ।
अमुं मन्त्रं समाराध्य तिर्यञ्चोऽपि दिवं गताः ॥ ३४ ॥
पतद् व्यसनपाताले भ्रमत् संसारसागरे ।
अनेनैव जगत् सर्वमुद्धृत्य विधृतं शिवे ॥ ३५ ॥
मूर्ध्नि रत्नत्रयं बिभ्रज्जिनबीजं नमोऽक्षरम् ।
इति रत्नत्रयं ध्येयं जिनबीजस्य बीजकम् ॥ ३६ ॥

इति श्रीसिंहतिलकसूरिकृतं
ऋषिमण्डलस्तवयन्त्रलेखनमिदम् ॥